पुनरेत्य गृहेषु इति, इयं वा अदितिः इयं प्रतिष्ठा यत् आदित्योऽस्यामेव प्रतितिष्ठति इति, तदेतत् तस्य दोषस्य परिहारार्थम् इति विज्ञायते। अतः तेन सहैकवाक्यतां याति, तन्मध्ये च ये इध्माद्यभाववचनास्तेऽपि तच्छेषा एव समुच्चारणात् न्याय्याः, ते यदि विधयः कल्प्येरन् पृथग्वाक्यानि भवेयुः, तत्र एकवाक्यरूपं बाध्येत। व्यवहितकल्पना च स्यात्। न च एषां विधायकत्वम्, अनुवादस्वरूपत्वात्, तस्मात् न विधयः। अथ कोऽत्र विशेषः, यत् समाने लिङ्गत्वे अन्तःपरिधिदर्शनम् असाधकम् इतरत् साधकम्? इति। विशेषम् उपरिष्टात् वक्ष्यामः।

## येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात् ॥२४॥ (२य पू०)

येषां वा यागानाम् अपरयोः, अग्न्योः होमः, तेषां प्रवृत्तिः स्यात्, पत्नीसंयाजानाम् इत्यर्थः। कुतः?। अविरोधात्, तत्र विरोधो नास्ति, यो नारिष्टहोमानां प्रवृत्तौ उक्तः, तत्राभावस्य हेतुत्वात् इति, तेषां हि इध्मा बर्हिः सान्निधेन्यश्च नैवाङ्गं, तदभावदर्शनम् तत्र न विरुध्यते। प्रवृत्तिधर्म्माणस्तेऽपि जुहोति-चोदनाश्च, सह पत्न्या जुहोति इति। तस्मात् तेषां प्रवृत्तिः।

## तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन् ॥ २५ ॥ (२ उ०)

नैतत् युक्तम्। किंकारणम्?। यतः, तत्र औष-

धानि चोद्यन्ते दर्विहोमे, यथा त्र्यम्बकेषु पुरोडाशाः करम्भपात्राणि तण्डुलाः इत्येवमादीनि, तानि स्थानेन गम्येरन् आज्यस्थानापत्त्या आज्यधर्म्माः प्राप्येरन्, ते न शक्याः तत्र अनुष्ठातुम्, अनुष्ठीयमाना वा अकृतकार्य्याः स्युः, तत्र चोदको बाध्येत। तस्मात् न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति, याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्त्येते, वषट्कारः स्वाहाकारेण।

## लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ (३य पू०)

पिष्टलेप-फलीकरणहोमयोः वा प्रवृत्तिः स्यात्। कुतः ?। लिङ्गात्, औषधसामान्यात्, यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तः, धर्म्माणाम् आनर्थक्यं, तत् अत्र नास्ति। तत्र औषधधर्म्मा निर्वपणादयः शक्याः कर्त्तुम्। तस्मात् तयोः प्रवृत्तिः इति।

## प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥२७॥

(३ उ०)

न तु एतदेवम्। कुतः ?। यतः प्रतिपत्तिकर्म्मणी एतौ होमौ, दर्विहोमाश्च प्रधानकर्म्माणि, तेषां दूरतो भेदः, सामान्यतश्च धर्म्मप्राप्तिः इष्यते। यच्च उक्तम्, औषधधर्म्माः शक्याः तत्र कर्त्तुम् इति, प्रतिपत्तित्वात् अप्रयोजकौ एव निर्वपणादीनां धर्म्माणाम्। अतः तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नं, नापि प्रयोजनवत्,

तस्मात् एतदप्ययुक्तम्। एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते। तस्मात् अपूर्वः।

## सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्ति-व्यवस्थानादर्थस्यापरिणेयत्वात् वचनादतिदेशः स्यात्॥ २८॥ (आ० नि०)

अथ कस्मात् उभयपक्षसाधनानाम् अपि लिङ्गानाम् भावे अप्रवृत्तिः एव प्रतीयते, न पुनः प्रवृत्तिः? इति। उच्यते, सन्निपाते विरोधिनाम् एतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुम् न न्याय्या। कुतः?। विध्युत्पत्तिव्यवस्थानात्, विधीनाम् उत्पत्तिः पाठः, स च व्यवस्थितः, केचित् दर्शपूर्णमासयोः पठ्यन्ते, केचित् सोमे, तेषाम् अर्थस्य अपरिणेयत्वं, यत्र पठिताः, ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते। तस्मात् अप्रवृत्तिः प्रतीयेत।

तत्र आह, किम् एष एव उत्सर्गः सर्वत्र अप्राप्तिः? इति। एवं खलु प्राप्ते उच्यते, वचनादतिदेशः स्यात्, यथा राष्ट्रभृताम् उद्दाहकर्म्मसु। असति एवंविधे वचनेऽपूर्वाः इति। अथ ये लिङ्गे अपदिष्टे, यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्, अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति इति, तयोः कः समाधिः?। उच्यते, अन्यायपूर्वत्वात् लक्षणया वादः स विज्ञायते, अन्तःपरिधिदेशे अन्तर्वेदिदेशे इति, परिधीनां वेद्याश्च तत्राभावात्, यथा रजनी मे कण्डूयति, तिलको मे स्पन्दते इति, राग-

भावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तारः इति। (८।४।४।अ०)।

इति श्रीभट्टशवरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य चतुर्थः पादः समाप्तः। समाप्तश्चायमष्टमोऽध्यायः।

---

## नवमस्य अध्यायस्य प्रथमः पादः।

अग्निहोत्रादिषु उक्तानां धर्म्माणामपूर्व्वप्रयुक्तत्वाधिकरणम्। (वर्णकान्तरद्वयसहितम्)।

### यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तं, इदानीमूहलक्षणं वर्त्तयिष्यामः। त्रिविधश्च ऊहः, मन्त्र सामः-संस्कारविषयः, स इह प्राधान्येन वक्ष्यते, अन्यदपि किञ्चित् उपोद्घातेन प्रसङ्गेन च। आदितस्त्वयम् अर्थश्चिन्त्यते लक्षणसिद्ध्यर्थम्। अग्निहोत्रं दर्शपूर्णमासौ जोतिष्टोमश्च उदा-

हरणम्। तत्र पृथक् धर्माः समाम्नाताः। तेषु संशयः, किं ते अपूर्वप्रयुक्ताः, उत यजिप्रयुक्ताः ? इति। अपूर्वप्रयुक्तेषु सत्सु ऊहः सिद्ध्यति, यजिप्रयुक्तेषु तु सङ्करो धर्माणाम्। कथमिव ?। सर्वे हि ते यजतयः, यजतिसामान्ये यजतिशब्दवाच्ये धर्मा विधीयमानाः सर्वत्र भवितुमर्हन्ति, अपूर्वप्रयुक्तत्वे तु, तदीयविशेषे विधीयमाना अन्यस्मिन् अपि तदीयविशेषापन्ने भविष्यन्ति। तस्मात् तत्र ऊहः सिद्धो भवति।

ननु एतत् सर्वं सप्तमे (१ अ०) विचारितं, निर्णीतं च। उच्यते, पुनः तदेव स्मार्य्यते, उत्तरचिन्ताविवक्षया। अथ वा तत्र योऽर्थो न उक्तः, तद्विवक्षयेदमुच्यते। कश्चासौ ?। तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तास्तदर्थत्वात् इति, एतेन च इह प्रयोजनम् ऊहं विवक्षितः, एवं हि स सिध्यति, तत्र एतत् न उक्तं, नैतेन तत्र प्रयोजनम् इति। तत्रत्या एतावती चिन्ता, किं प्रतिप्रकरणं नियता धर्माः, उत सर्वे सर्वत्र ? इति, तत् अपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति, न द्रव्यसंस्कारस्य अपूर्वार्थत्वे, तत्तु इह सिद्धम्, तत्र अपूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थम् असूचितम् उपादीयते। तस्मात् अपुनरुक्तम्।

द्वितीयवर्णकम्।

अथ वा, अन्यामेव चिन्ताम् इह वक्ष्यामः, किं यजिनिमित्ता धर्माः अपूर्वप्रयुक्ताः, उत अपूर्वनिमित्ता अपूर्वप्रयुक्ताश्च ? इति। इदानीं तु यजिप्रयुक्ता अपूर्वप्रयुक्ता

वा ? इति चिन्त्यते। किं तावत् प्राप्तम् ? यजिप्रयुक्ताः इति। कुतः ?। यजिशब्देन इतिकर्त्तव्यताया अभिसम्बन्धात्, एवं यागं कुर्य्यात्, एवं यागेन कुर्य्यात्, इति।

एवं प्राप्ते ब्रूमः, यजत्यर्थस्य यत् कार्य्यं, तत् प्रधानं, तद्धि कर्त्तव्यतया चोद्यते। यत्र कर्त्तव्यता, तत्रैवेतिकर्त्तव्यता। अथ यदुक्तं, यजतिशब्देनाभिसंयोगो धर्माणाम् इति, तदुच्यते, तस्य द्रव्येषु यजतौ च, यः संस्कारः, स तत्प्रयुक्तः अपूर्वप्रयुक्तः, तदर्थत्वात्, यजतेः, द्रव्याणां च तदीयत्वेन धर्मैरभिसम्बन्धः, न स्वेनात्मना, न हि धात्वर्थस्य च धर्माणां च परस्परेण आकाङ्क्षा विद्यते। प्रत्ययार्थेन हि इति कर्त्तव्यता आकाङ्क्ष्यते, कर्त्तव्यं कथम् ? इति, न यजिः कीदृशः ? इति। तस्मात् यत् कर्त्तव्यं, तस्यैवेतिकर्त्तव्यतया सम्बन्धः, अपूर्वं च तत्। तस्मात् अपूर्वप्रयुक्ताः इति।

तृतीयवर्णकम्।

एवं वा, एतेषु एव उदाहरणेषु इति चिन्त्यते, किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उत अपूर्वं प्रयोजकं निमित्तं च ? इति। किं प्राप्तम् ? यजिनिमित्तम् अपूर्वं प्रयोजकम् इति। कुतः ?। नैकस्य प्रयोजकत्वं निमित्तभावश्च उपपद्यते, यदर्थं हि क्रियन्ते धर्माः, तत् प्रयोजकम्। यस्मिन् सति क्रियन्ते, तन्निमित्तं, न च एकस्मिन् शब्दे अपूर्वायैते, अपूर्वे च भवन्ति इति शक्यं वदितुम्, अन्या हि वचनव्यक्तिः अपूर्वार्थेषु, अन्या च अपूर्वे सति

इति, यजिनिमित्तत्वे तु शब्दोऽवकल्पते, एवं यागेन कुर्य्यात् इति, यागे सति अपूर्वस्य उपकारकाणि, असति अनुपकारकाणि अङ्गानि इति। तस्मात् यजिर्निमित्तम्, अपूर्वं तु प्रयोजकम् इति।

एवं प्राप्ते ब्रूमः, यज्ञकर्म प्रधानं, यजतेः कार्य्यं, तद्धि फलवत् चोद्यते, तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्वप्रयुक्तः, तदर्थास्ते इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषाम् अभिसम्बन्धः, प्रयोगवचनेनैते प्रत्ययार्थेन सम्बध्यन्ते, स हि साकाङ्क्षो न धात्वर्थः। तस्मात् अपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च। यदुक्तं, अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते, वचनव्यक्तिभेदात् इति, तत्र उच्यते, प्रयोजकत्वं वाचनिकम्, निमित्तभावश्च नैव वचनात् भविष्यति इति, यद्धि येन प्रयुज्यते, भवति तत् तस्य निमित्तं, यथा, आरामपोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च, आरामे सति तस्मै वेतनं दीयते, वेतनसम्बन्धो भवति आरामं रक्षितुम्। तस्मात् धर्माणाम् अपूर्वमेव प्रयोजकं निमित्तं च इति। (९।१।१ अ०)।

---

प्रोक्षणस्यापूर्व्वप्रयुक्तत्वाधिकरणम्। (वर्णकान्तरसहितम्)

## संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥ (पू०)

दर्शपूर्णमासौ प्रति समामनन्ति, प्रोक्षिताभ्याम् उलूखलमुसलाभ्याम् अवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि इति। तत्र अयमर्थः सांशयिकः, किं प्रोक्षणं हन्तिपिषिप्रयुक्तम्, उत अपूर्वप्रयुक्तम्? इति। किं प्राप्तम्? संस्कारे हन्तिपिष्याख्ये प्रयुज्यमानस्य प्रोक्षणस्य तत्प्रयुक्तता स्यात्, संस्कारप्रयुक्तता, संस्कारौ हि हन्तिपिषी। कुतः एतत्प्रयुक्तता? इति। तादर्थ्यात्, यद्धि येन कर्त्तव्यं भवति, तत्, तस्य प्रयोजकं यदि अपूर्वम् अनेन क्रियते, ततोऽस्य अपूर्वं प्रयोजकं, यदि हन्तिपिषी, ततस्तौ प्रयोजकौ। प्रकरणाच्च अपूर्वं कर्त्तव्यं गम्यते, वाक्यात्, हन्तिपिषी, वाक्यं च प्रकरणाद्बलीयः इति।

ननु हन्तिपिष्योः क्रियमाणम् अपूर्वार्थं भविष्यति, तत्र प्रकरणं च वाक्यं च उभयमपि अनुग्रहीष्यते। उच्यते, न शक्यम् उभयम् अनुग्रहीतुम्, न प्रकरणसमाम्नायमात्रेण प्रकरणवतोऽर्थेन समाम्नातम् इति गम्यते, प्रकरणसमाम्नानात् प्रकृतेनैकवाक्यता भवति, ततः तादर्थ्यम् अवगम्यते, इह तु प्रत्यक्षाभ्यां हन्तिपिषिभ्यां प्रोक्षणस्य एकवाक्यता, सा प्रकृतेनैकवाक्यतां परोक्षां बाधेत, न च, द्वाभ्याम् अपि सहैकवाक्यता स्यात्, यदा एकेनैकवाक्यता, तदा तेन निराकाङ्क्षस्य न अन्येन अपि एकवाक्यता कल्पते। तस्मात् प्रकृतेन एकवाक्यत्वाभावात् न अपूर्वार्थं प्रोक्षणम्।

आह, ननु हन्तिपिषी अपूर्वार्थौ, तदर्थं प्रोक्षणं, तस्मात् अपूर्वस्य उपकारकम् इति। उच्यते, भवति प्रणाड्या उपकारकं, न तु अपूर्वप्रयुक्तं, द्विविधं हि अङ्गं

अङ्गस्य उपकारकं भवति, किञ्चित् अपूर्वस्य एतदङ्गम् विशिष्टम् इत्यनेन कारणेन अङ्गेन सम्बध्यते, किञ्चित् अनपेच्यैव अपूर्वसम्बन्धं, स्वरूपेण एव कारणेन सम्बध्यते, यत् अपूर्वसम्बन्धं कारणत्वेन उपादाय धर्मजातमङ्गविशेषेण सम्बध्यते, तत् अपूर्वप्रयुक्तं भवति। तादृशं च विकृतौ अर्थान्तरे तत्कार्य्यापन्ने ऊहितव्यं भवति, तत्र पुनः स्वरूपमङ्गस्य धर्मसम्बन्धे कारणं भवति, तत् स्वरूपप्रयुक्तं, तत्र यद्यपि तेन धर्मवता अपूर्वं साध्यते, तत्र साध्यमानम् अपूर्वं न धर्मस्य प्रयोगहेतुभूतं भवति, न तत् प्रयोजकं, तस्य स्वरूपं विद्यते इति न धर्मः प्रयुज्यते। तत्र विकृतौ अर्थान्तरे तद्रूपाभावात् ऊहो न अवकल्पते। एवं सति वाक्यान्निर्णयः, यदि वाक्यम् अपूर्वस्य कारणतां वदति, ततोऽपूर्वप्रयुक्तम्, अथ अङ्गस्य, ततोऽङ्गप्रयुक्तम्। तत्र उक्तप्रकरणात् अपूर्वप्रयुक्तं स्यात्, वाक्यात्तु अङ्गप्रयुक्तता इति। तस्मात् हन्तिपिषिप्रयुक्तं प्रोक्षणम् इति। यत्र यत्र हन्तिपिषी प्रयुज्येते, तत्र तत्र एवं धर्मकौ भवतः इति।

**तेन त्वर्थेन यज्ञस्य संयोगात् धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥३॥ (सि०)**

तुशब्दः पक्षं व्यावर्त्तयति, न तु एतदस्ति, हन्तिपिषिप्रयुक्तं प्रोक्षणम् इति, तेन तु अर्थेन हन्तिना पिषिणा वा। यस्मात् अपूर्वस्य संयोगः, तस्मात् तस्य प्रोक्षणसम्बन्धः, अपूर्वसाधनविशेषकारितः प्रोक्षणसंस्कारेण सम्बन्धः, ५

हन्तिपिषिकारितः। कथम्?। निष्प्रयोजनौ हन्तिपिषी, यदि तत्प्रयुक्तं प्रोक्षणं, तदपि निष्प्रयोजनम्, अतो न तत्प्रयुक्तम्।

आह, अपूर्वस्य उपकारकौ हन्तिपिषी न निष्प्रयोजनौ इति। उच्यते, न प्रोक्षणस्य अपूर्वस्य कश्चिदस्ति सम्बन्धः, यदि प्रोक्षणं न क्रियते, न, हन्तिपिषी अपूर्वस्य साधनभावं न गच्छतः, तस्मात् यद्यपि हन्तिपिषी अपूर्वस्य उपकारकौ, तथापि ताभ्यां सम्बध्यमानं प्रोक्षणम् अनर्थकमेव।

अथ उच्यते, यदर्थं हन्तिपिषी उपादीयेते, तत् प्रोक्षणसम्बद्धौ शक्नुतः कर्त्तुम्, नान्यथा इति। उच्यते, न एवञ्जातीयकः शब्दोऽस्ति इति। तत्र आह, अयमेव शब्दः एतमर्थम् अभिवदति इति। कथम्?। प्रोक्षिताभ्याम् अवहन्ति, प्रोक्षिताभ्यां पिनष्टि इति यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणसम्बद्धाभ्याम् इति हन्तिपिषिकार्य्येण प्रोक्षणं सम्बध्यते, न ताभ्याम् इति। उच्यते, नैतदेवं, यदि यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणेन अभिसम्बध्यते, सम्बन्ध एव प्रोक्षणस्य न स्यात्, तत् हि ताभ्याम् अभिनिर्वर्त्त्यते, किम् अपरं, तत् प्रोक्षणम् अभिनिवर्त्तयेत्। अथ प्रोक्षिताभ्याम् अपूर्वं क्रियते इति सम्बन्धः। न तर्हि हन्तिना पिषिणा वा। अथ तत्सम्बन्धोऽपि उच्यते इति। अनेकसम्बन्धे वाक्यम्भिद्येत। तस्मात् हन्तिपिषिभ्यां प्रोक्षणं सम्बध्यमानम् अप्रयोजनम् इति प्रकरणात् अपूर्वेण सम्बध्यते।

ननु एवं हन्तिपिषिसम्बन्धो न अवकल्पयेत। अवकल्पिष्यते इति ब्रूमः। कथम्?। इह अवघातं प्रति यतमानस्य द्वयं निष्पद्यते, अवहन्तिरूपं, तण्डुलनिर्वृत्तिश्च। प्रणाड्या च अपूर्वभावनाविशेषः, तण्डुलनिर्वृत्तिर्हि अपूर्वोपकारः, सोऽवहन्तिक्रियया चिकीर्षितः, तेन प्रोक्षणस्य सम्बन्धः, यद्यपि अवहन्तिरूपेण सम्बध्यमाने प्रोक्षणे श्रुत्या सम्बन्धो भवति। तथापि तत्र निष्प्रयोजनत्वात् लक्षणैव आश्रीयते, लक्षणा हि प्रत्यक्षा, सा अदृष्टकल्पनाया ज्यायसी। न च, अवहन्तिः आरादुपकारकोऽपूर्वं निष्पादयति, दृष्टम् उपकारं कुर्वन् अदृष्टेन सामर्थ्येन समीचीनं करोति इति गम्यते, यद्यपि च निष्पादयेत्, तथापि उपकारेण असम्बध्यमानं प्रोक्षणं केवलावहन्तिसम्बन्धेन अनर्थकम् एव स्यात्। अतोऽवहन्तिलक्षितेन उपकारविशेषेणास्य सम्बन्धः। तस्मात् अनवहन्तिरपि यः तत्कार्य्यापन्नः, तत्र प्रोक्षणं भवत्येव, यथा नखनिर्भिन्ने चरणौ नखेषु। तस्मात् अपूर्वप्रयुक्तः एवञ्जातीयको धर्म्मः इति।

वर्णकान्तरम्। (उच्चावचध्वनेः परमापूर्व्वप्रयुक्तत्वाधिकरणम्)।

एवं वा,

अस्ति ज्योतिष्टोमः, तत्र इदं समाम्नायते, यावत्या वाचा कामयेत, तावत्या दीक्षणीयायाम् अनुब्रूयात्, मन्द्रं प्रायणीयायां मन्द्रतरम् आतिथ्यायाम् उपांशु उपसत्सु इति। तत्र अयम् अर्थः सांशयिकः, किं परमापूर्वप्रयुक्ता एते धर्म्माः, उत दीक्षणीयाद्यपूर्वप्रयुक्ताः? इति। किं प्राप्तम्? परमापूर्व्वसंस्कारे दीक्षणीयाद्यपूर्वे युज्यमानस्य

अस्य धर्मस्य परमापूर्वार्थत्वात् दीक्षणीयादीनां परमापूर्वार्थतैव स्यात्, परमापूर्वं हि फलवत्, यत् कर्त्तव्यतयाऽभिसम्बध्यते, तदेव धर्म्मैरभिसम्बध्यते, न अङ्गापूर्वं, निष्प्रयोजनं हि तत् इति ।

**तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥३॥ (सि०)**

तेन त्वर्थेन दीक्षणीयादिना, यस्मात् परमापूर्वस्य सम्बन्धः, तस्मात् परमापूर्वम् एवञ्जातीयकेन धर्मेण धर्मवत् । तस्मात् अङ्गयज्ञप्रयुक्तम् एवञ्जातीयकं धर्मजातं, तथा श्रुतिः शब्दो भवति, इतरस्मिन् पक्षे लक्षणा स्यात्, न च प्रायणीयाद्यपूर्वं निष्प्रयोजनं, ज्योतिष्टोमस्य हि तत् उपकारकं, न च, तत् विना, एवञ्जातीयकेन धर्मेण प्रायणीयाद्यपूर्वं सिद्धम्, अवहन्ति पिषिवत् ।

यदुच्यते, विनैव धर्मेण, तत् अपूर्वं भविष्यति इति । तन्न । कुतः ? । तदपि हि अपूर्वं, शब्दात् एव अवगम्यते, अस्तीति, प्राक् शब्दात्; अन्येन प्रमाणेन उपसङ्ख्यायते । एवञ्जातीयके च शब्दप्रमाणके यत् शब्दः आह, तत् अस्माकं प्रमाणम् । शब्दश्च प्रायणीयाद्यपूर्वस्य उपकारकम् इमम् धर्मम् आह, न परमापूर्वस्य, वचनप्रामाण्यात् ।

एवञ्चापरमापूर्वनिष्पत्तेरजरम् अविनाशि च अत्र धर्मः प्रतिष्ठितो न परमापूर्वं संक्रमिष्यति, एवमपि प्रयोजनसमर्थः । तस्मात् एवञ्जातीयकं धर्मजातम् अङ्गापूर्वप्रयुक्तम् एव इति ।

किं भवति प्रयोजनम् इतरस्मिन् इतरस्मिन् वा पक्षे ? इति। उच्यते, अश्वमेधे समाम्नायते, त्रैधातवीया दीक्षणीया भवति इति, यदि परमापूर्वप्रयुक्त एवञ्जातीयको धर्मः, ततः तस्य उपकारविशेषे निबद्धः इति तत्कार्य्यापन्नायां त्रैधातव्यायां भविष्यति। अथ आग्नावैष्णवापूर्वप्रयुक्तः, ततो न इदम् आग्नावैष्णवापूर्वम् इति तत्र त्रैधातव्यापूर्वं न तेन धर्मेण सम्भंत्स्यते इति। (८।१।२। अ०)

---

फलदेवतासम्बद्धधर्माणामप्यपूर्व्वप्रयुक्तताधिकरणम्।

## फलदेवतयोश्च ॥ ४ ॥ (पू०)

'दर्शपूर्णमासौ स्तः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति। तत्र फलसम्बद्धो धर्मो देवतासम्बद्धश्च श्रूयते, फलसम्बद्धस्तावत्, अगन्म स्वः सं ज्योतिषा भूम इति, देवतासम्बद्धोऽपि, अग्नेरुज्जितिमनूज्जेषं सोमस्य उज्जितिमनूज्जेषम् इत्यादिः। तत्र संशयः, किं स्वर्गसम्बद्धस्य कर्मणः स्वर्ग एव प्रयोजकः, अग्न्यादिसम्बद्धस्य अग्न्यादय एव, उत उभयत्रापि अपूर्वं प्रयोजकम् ? इति। यद्येवं अभिसम्बन्धः क्रियते, गताः स्वः स्वर्गं, अग्न्यादीनां च उज्जितिमनूज्जेषम् इति, ततः स्वर्गाग्न्यादिप्रयुक्तः। अथ एवं क्रियते, आगता दर्शपूर्णमासफलं, दर्शपूर्णमासदेवताश्च उज्जितिमनूज्जेषम् इति, ततोऽपूर्वप्रयुक्तः। किं प्राप्तम् ? स्वर्गाग्न्यादिप्रयुक्तः इति। कुतः ?। मन्त्राम्नानसामर्थ्यात्, यस्य मन्त्रो

वाचकः, स इह वदितव्यः इति गम्यते, श्रुत्या च स्वर्गाग्न्यादीनां वाचको मन्त्रः, लक्षणया दर्शपूर्णमासफलदेवतयोः, तस्मात् यत् फलदेवतम् इति समधिगतं स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्मः स्यात् इति ।

## न, चोदनातो हि ताद्गुण्यम् ॥ ५ ॥ (उ०)

नैतदस्ति, स्वर्गाग्न्यादिप्रयुक्तः इति, चोदनातः ताद्गुण्यं स्यात्, यत् फलवच्चोद्यते, तदितिकर्त्तव्यतया अनुबध्यते, अपूर्वं च फलवत्, न स्वर्गाग्न्यादि, तदर्थं वचनं सत् अदृष्टार्थं कल्पेत, लक्षणया च अपूर्वफलदेवतावचनेऽदृष्टोऽर्थः स्यात्, प्रोत्साहनात् । एतस्मिन् पक्षान्तरे दृष्टे सति न स्वर्गाग्न्यादिवचनस्य अपूर्वस्य कल्पना न्याय्या, शब्दार्थस्य च फलदेवतात्वेन संप्रतिपन्नत्वात् लक्षणा अदृष्टा । तस्मात् अपूर्वप्रयुक्त एवञ्जातीयको धर्मः इति ।

किं भवति विचारस्य प्रयोजनम् ? । यथा पूर्वः पक्षः, सौर्य्ये कर्मणि अविकारेण मन्त्रः प्रयोक्तव्यः, यथा तर्हि सिद्धान्तः, ऊहेन अगन्म ब्रह्मवर्चसं सूर्य्यस्य उज्जितिमनूज्जेषम् इति फले पर्य्यवसितम् । देवतायाम् उत्तरा चिन्ता वर्त्तिष्यते । (८।१।३ अ०) ।

---

धर्म्माणामदेवताप्रयुक्तत्वाधिकरणम् ।

## देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ (पू०)

नैतदस्ति, अग्न्यादयोऽप्रयोजकाः इति, सर्वा देवताः

सर्वेषां धर्माणां प्रयोजिकाः भवितुमर्हन्ति। कुतः?। भोजनस्य तदर्थत्वात्, भोजनं हि इदं देवतायाः, यागो नाम, भोज्यं द्रव्यं देवतायै प्रदीयते, सा भोच्यते इति, देवतासम्प्रदानको हि अयं यागः श्रूयते, सम्प्रदानं च नाम कर्मणोऽपि ईप्सिततमादभिप्रेततरम्। तस्मात् न गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्मणी। अपि च यागो नाम देवतापूजा, पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते, तदेतत् अतिथिवत् द्रष्टव्यं, यथा यावत्किञ्चित् अतिथेः परिचरणं, सर्वं तत् अतिथिप्रयुक्तम्, एवम् इदमपि इति।

आह, ननु एवं ब्रुवता विग्रहवती देवता भुङ्क्ते च इत्यभ्युपगतं भवति। उच्यते, बाढ़ं, विग्रहवती देवता भुङ्क्ते च। कुतः?। स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च एवं हि स्मरन्ति, विग्रहवती देवता इति, स्मृतिश्च नः प्रमाणम्। तथा विग्रहवतीं देवताम् उपचरन्ति, यमं दण्डहस्तमालिखन्ति, कथयन्ति च, तथा वरुणं पाशहस्तम् इन्द्रं वज्रहस्तम्। उपचारादपि स्मृतेर्दृढ़िमानं कल्पयामः। तथा अन्यार्थवचनं, विग्रहवतीं देवतां दर्शयति, जगृभ्मा ते दक्षिणम् इन्द्रहस्तम् इति, पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति। तथा, इमे चित् इन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित्ते इति, काशिर्मुष्टिः सोऽपि पुरुषविग्रहस्य एव उपपद्यते। तथा, तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे। इन्द्रो वृत्राणि जिघ्नते इति,ग्रीवा उदरं बाहू इति पुरुषविग्रहदर्शनं भवति। तस्मात् विग्रहवती

देवता इति भुङ्क्ते च। कथम् अवगम्यते ?। स्मृतेः, उपचारात् अन्यार्थदर्शनाच्च, एवं स्मरन्ति, भुङ्क्ते देवता इति। तथा च एनाम् भुञ्जानाम् इव उपचरन्ति, यदस्यै विविधान् उपचारान् उपहरन्ति। तथा च अन्यार्थवचनं भुञ्जानाम् देवतां गमयति, अद्धीन्द्र पिब च प्रस्थितस्य इति, तथा च, विश्वासनार्ग नजठरेषु धत्ते इति, एकया प्रति धा पिबत्साकं सरांसि त्रिंशतम् इति।

आह, न देवता भुङ्क्ते, यदि च भुञ्जीत देवतायै हविः प्रत्तं चीयेत। उच्यते, अन्नरसभोजिनी देवता मधुकरीवत् अवगम्यते। कथम् ?। देवतायै हविः प्रत्तं नीरसं भवति, तस्मात् अन्नरसं भुङ्क्ते देवता इति गम्यते।

## आर्थपत्याच्च ॥ ७ ॥ (यु०)

यदि कस्यचित् अर्थस्य ईशाना देवता उपचर्य्यमाणा च प्रसीदेत्, ततः तदाराधनार्थम् इयं देवतापूजा अभिनिर्वर्त्त्येत, न च एतदुभयम् अपि अस्ति इति, तत् उच्यते, अर्थपतिर्देवता इति। कथम् अवगम्यते ?। स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च, हि स्मरन्ति, अर्थानाम् ईष्टे देवता इति। तथा, देवग्रामो देवक्षेत्रम् इत्युपचारस्तामेव स्मृतिं द्रढयति। तथा अन्यार्थवचनम् ईशानां देवतां दर्शयति, इन्द्रो दिव इन्द्र ईशे पृथिव्यां इन्द्रो अपामिन्द्र इत् पर्वतानां, इन्द्रो वृधाम् इन्द्र इन्मेधिराणाम् इन्द्रः क्षेमे योगे हव्ये इन्द्रः इति, तथा, ईशानम् अस्य जगतः स्वं ईशम् ईशानम् इन्द्र तस्थुषे इति।

तथा, स्मृत्युपचाराभ्यां प्रसीदति इत्युपगच्छामः, एवं

हि स्मरन्ति, प्रसीदति देवता इति। तथा उपचरन्ति, प्रसन्नोऽस्य पशुपतिः, पुत्रोऽस्य जातः। प्रसन्नोऽस्य वैश्रवणो धनम् अनेन लब्धम् इति। तथा अन्यार्थदर्शनं भवति, आहुतिभिरिव हुतादो देवान् प्रीणाति इति, तस्मै प्रीता इषमूर्जं नियच्छन्ति इति।

## ततश्च तेन सम्बन्धः ॥ ८ ॥ (यु० २)

ततो देवतायाः, तेन फलेन सम्बन्धः परिचरितुर्भवति, यो देवताम् इज्यया परिचरति, तं सा फलेन सम्बध्नाति। कथम्? एतत् अवगम्यते। स्मृत्युपचाराभ्यां, स्मरन्ति हि, देवता यष्टुः फलं ददाति इति, तामेव उपचारेण स्मृतिं दृढ़यति, पशुपतिः अनेन उपचरितः, पुत्रोऽनेन लब्धः इति। तथा, अन्यार्थदर्शनम् इममेव अर्थं दर्शयति, स इत् जनेन स विशा स जन्मना स पुत्रैर्वाजम्भरते धना नृभिः। देवानाम् यः पितरमा वि वासति श्रद्धामना हविषा ब्रह्मणस्पतिम् इति, तथा, तृप्त एवैनम् इन्द्रः प्रजया पशुभिः तर्पयति इति। तस्मात् हविर्दानेन गुणवचनैश्च देवता आराध्यते, सा प्रीता सती फलं प्रयच्छति, येन कर्मणा अग्निराराधितः, तस्य फलस्य ईष्टे, तत् कर्त्रे प्रयच्छति, न तत् सूर्यः प्रदातुमर्हति वचनादेतत् अवगम्यते, कः किं प्रयच्छति इति, यथा अग्नौ वचनं, न तत् सूर्ये।

## अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ (सि०)

अपि वा इति पक्षो व्यावर्त्तते। न चैतदस्ति, यदुक्तं देवता प्रयोजिका इति, यज्ञकर्म प्रधानं स्यात्, यजतेर्जातम् अपूर्वम्। कुतः? शब्दपूर्वत्वात्, यत् हि फलं ददाति, तत् प्रयोजकं इदं फलं ददाति इत्येतत् ज्ञानं शब्दपूर्वकं न प्रत्यक्षादिभिः अवगम्यते। शब्दश्च यजतिवाच्यात् फलम् आह, न देवतायाः। कथम् अवगम्यते?। दर्शपूर्णमासयोः करणत्वेन निर्द्देशः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति, तथा, ज्योतिष्टोमेन स्वर्गकामो यजेत इति, यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः।

ननु द्रव्यदेवताक्रियं यजत्यर्थः। सत्यमेवं, किन्तु गुणत्वे देवताश्रुतिः, द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः, भूतभव्यसमुच्चारणे च भूतं भव्याय उपदिश्यते, तस्मात् न देवता प्रयोजिका।

अथ यदुक्तं, कर्म्मणः ईप्सितादभिप्रेततरम् इति, न अस्य अभिप्रेतताम् अपक्रमहे, तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यात् अभिप्रेतता अवगम्यते, फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य, तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः। तत्र यद्यपि देवतार्थता यागस्य गम्यते, फलार्थतापि तेन न प्रतिषिध्यते। फलं च पुरुषार्थः, पुरुषार्था च नः प्रवृत्तिः, न च असौ देवतायाः, तस्मात् न देवताप्रयुक्ताः प्रवर्त्तिष्यामहे, या तु, सम्प्रदानस्य अभिप्रेतता सा फलवती यजेः, साधनत्वे सति उपपद्यते।

यच्च, यजिर्देवतापूजा सा पूज्यमानप्रधाना लोके लक्ष्यते इति। न लोकवत् इह भवितव्यं, इह पूज्यमान-पूजा प्रधानं, यत् हि फलवत्, तत् प्रयोजकं, तस्मात् यज्ञकर्म्म प्रयोजकम्। अपि च, एतस्मिन् पक्षे विग्रहवती देवता भुङ्क्ते च इति अध्यवसनीयं भवति, न हि अवि-ग्रहायै अभुञ्जनायै च दानं भोजनं वा सम्भवति इति।

यच्च उक्तं, स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती। भुङ्क्ते च इति। तत्र, स्मृतेर्मन्त्रार्थवादमूलत्वात्, मन्त्रेभ्यश्च अर्थ-वादेभ्यश्च स्मृतिमूलं विज्ञानम् उत्पद्यते इति प्रत्यक्षम् अव-गम्यते, ते च मन्त्रार्थवादा नैवंपराः इत्येतत् वक्ष्यामः।

आह, यदि नैवंपरा न तर्हि मन्त्रार्थवादमूलं तद्वि-ज्ञानम् इति। उच्यते, ये आलोचनामात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषाम् तत् स्मृतिमूलं, ये पुनर्निपुणतः पश्यन्ति, तेषां तत् बाधितम् अपि च कस्यचित् स्मृतिमूलं भवति। तस्मात् ततः एव स्मृतिः, उपचारोऽपि स्मृतिमूल एव। यत्तु अन्यार्थदर्शनम्, उक्तं, जगृभ्मा ते दक्षिणम् इन्द्र हस्तम् इति। नैतत् एवम्परं, इन्द्रस्य हस्तो विद्यते इति, यः तस्य दक्षिणो हस्तस्तं वयं गृहीतवन्त इति। तस्मात् वाक्यात् इन्द्रस्य हस्तसत्ता न प्रतीयते।

आह, यदि त्वसौ नास्ति, वयं ते हस्तं गृहीतवन्तः इत्येवं न अवकल्पते इति हस्तसत्ता अध्यवसीयते, अस्त्यसौ हस्तः, वयं यं गृहीतवन्तः इति। तत्र उपपद्यते, यद्यप्यस्य हस्तो भवेत्, तथापि न तम् उपगृहीतवन्तः इति प्रत्यक्ष-

मेतत्, तथाप्येतन्न अवकल्पत एव, तत्र एतत् असम्बद्धं वा अवकल्पयितव्यं, स्तुतिर्वा, तच्च मत्पक्षेऽपि तुल्यम्।

अथ एवम् उच्यते, तस्य एतद्वचनं यो गृहीतवान् तस्य हस्तम् इति। उच्यते, नैतत् अध्यवसेयम्, आदिमत्तादोषो वेदस्य प्रसज्येत, न च, गृहीतवान् आसीत् इत्युच्यते, प्रमाणाभावात्। एतस्मात् एव वचनात् अर्थात् कल्प्यते हस्तग्रहीता इति चेत्। तन्न, अयथार्थस्यापि उच्चारणं सम्भवत्येव यतः, यथा, दश दाड़िमानि षड़पूपाः इति। यस्यापि च एष पक्षो, विग्रहवान् इन्द्रः इति, तस्यापि इन्द्रशब्देन आमन्त्रणं सम्बोधनार्थं, सम्बोधनम् अनुवचनाय, तत्र सम्बद्धः इत्यवगते अनुवचनं न्याय्यं, न च, असौ केनचित् प्रकारेण सम्बद्धः इति अवगम्यते, अनवगते सम्बोधनं व्यर्थम्। वचनप्रामाण्यात् सम्बुध्यते इत्येवं गम्यते इति चेत्। उक्तम् अदृष्टकल्पनायां हस्तादिकल्पनानुपपत्तिरिति। न च, असौ सम्बुद्धः इति अवधार्यते, प्रमाणाभावात्। तस्मात् सम्बोधनवचनं न सम्बोधनाय, निर्देशार्थमेव। अविग्रहपक्षेऽपि तत् निर्देशार्थमेव भविष्यति। तत्र आमन्त्रितविभक्तिवचनं स्तुतये, एवं इदं देवतात्वं साधयितृतमं, यच्चेतनादिवत् सम्बुध्य साधयति इति चेतनवदिव उपचर्यमाणः सम्बुद्धिशब्देन आमन्त्र्यते, तथा सम्बोधनशब्देन निर्दिश्य उच्यते, गृहीतवन्तो वयं तव हस्तं त्वदाश्रया वयम् इत्यर्थः। अस्माभिः इन्द्रकर्म कर्त्तव्यम् इत्येतत् अनेन स्मार्यते।

तथा इमे द्यावापृथिव्यौ दूरे अपारे यत् संगृह्णाति

मघवन्नही ते पूजितो मुष्टिः इति सन्तमिव मुष्टिं स्तुत्यर्थेन वदति, तस्यापि भावे न प्रमाणमस्ति, न इदं वचनं इत् महान् काशिः अस्ति, किन्तर्हि, यस्तव काशिः, स महान् इति, अन्यार्थस्तव काशिरस्ति इति, अन्यः तव काशिर्महान् इति। सता हि स्तुतिः उपपद्यते इति चेत्। नैतत्, नियोगतो यस्यापि पौरुषविधिकैरङ्गैर्नास्ति संयोगः, पौरुषविधिकैरङ्गैः तस्यापि स्तुतिर्भवति, यथा, एते वदन्ति शतवत् सहस्रवत् अभिक्रन्दन्ति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत इति। तथा, सुखं रथं युयुजे सिन्धुरश्विनम् इति। तस्मात् न स्तुतिवचनात् अर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः। तथा, तुविग्रीव इन्द्रः इति नैतत् युक्तं भवति, ग्रीवावान् इन्द्रः इति, किन्तर्हि याऽस्य ग्रीवा, सा महती। ग्रीवासत्त्वे नास्ति प्रमाणम्। न च, ग्रीवास्तुतिः अर्थापत्तिः अपुरुषविधेऽपि स्तुत्युपपत्तेः।

अपि च, इन्द्रो वृत्राणि जिघ्नते इत्येताभ्यां पदाभ्याम् इन्द्रशब्दः सम्बद्धो न शक्नोति तुविग्रीवादिभिः सम्बन्धं यातुं, द्विरुच्चारणम् अस्य प्रसज्यते, तुविग्रीवावान् इन्द्रो वेदितव्यः, वृत्राणि च इन्द्रो हन्ति इति, तथा हि सति भिद्येत। अभिन्नं च वाक्यम् उपलभ्यते, तदेवम् अवकल्पते, यदि तुविग्रीवादयोऽस्य न उपदिश्यन्ते इति स्तुत्यर्थं सङ्कीर्त्यंते तुविग्रीवादिः, अन्धसो मदे ईदृशो वृत्राणि हन्ति इति एषा तु वचनव्यक्तिः, वृत्रबधोपदेशपरम् इदं वचनम् इति। यदपि वचनं, बाहू ते इन्द्र रोमशौ, अक्षी ते इन्द्र

पिङ्गले इति, तदपि बाह्वोः रोमशत्वम् अक्ष्णोश्च पैङ्गल्यम् आह, न बाहुसत्तामक्षिसत्तां च। यदपि अक्षिसत्तां वदति इति गम्यते, चक्षुष्मते शृण्वते ते ब्रवीमि इति, तदपि न चक्षुःसम्बन्धार्थं, चक्षुष्मते ब्रवीमि इति वचनसम्बन्धार्थं, तत् सतीमिव चक्षुष्मत्तां स्तुत्यर्थम् उच्चारयति। कुतः एतत् अवगम्यते ?। चतुर्थीनिर्देशात्, यदि प्रातिपदिकार्थोऽध्यवसीयते, तथा वाक्यम्भिद्येत, चक्षुष्मान् इत्येवं च उद्दिश्येत, चक्षुष्मते ते ब्रवीमि इति च। तस्मात् न किञ्चित् अन्यार्थदर्शनं पुरुषविधतां देवतायाम् इदं ख्यापयति इति। न च, इदं भोजनं, नहि देवता भुङ्क्ते। तस्मात्, भोजनस्य तदर्थत्वात् इति तत् असद्वचनम्।

यदपि स्मृत्युपचारान्यार्थदर्शनैर्भुङ्क्ते इति, तत् अविग्रहत्वेन प्रत्युक्तम्। अपि च, भुञ्जानायै देवतायै प्रत्तं हविः क्षीयेत। न च, मधुकरीवत् अन्नरसभोजिन्यो देवताः इति प्रमाणमस्ति, मधुकरीषु प्रत्यक्षं, न च तद्वत् देवतायाम्। तस्मात् न भुङ्क्ते देवता इति। यदुक्तं, देवतायै हविः प्रत्तं नीरसं भवति इति। नैष दोषः, वातोपहतं नीरसम्भवति इति, शीतीभूतं च। न च, असौ कस्यचित् अर्थस्य ईष्टे, अनीशा कथं दास्यति ? इति।

यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैः ईशाना देवता इत्यवगम्यते इति। तत्र, स्मृतेः मन्त्रार्थवादमूलत्वात् इत्युक्तम्। उपचारोऽपि, देवग्रामो देवक्षेत्रम् इति, उपचारमात्रं, यो यदभिप्रेतं विनियोक्तुमर्हति, तत्तस्य स्वं, न च ग्रामं क्षेत्रं वा यथाभिप्रायं विनियुङ्क्ते देवता। तस्मात् न

सम्प्रयच्छति इति, देवपरिचारकाणान्तु ततो भूतिर्भवति, देवताम् उद्दिश्य, यत् त्यक्तम् ।

यदुक्तम्, अन्यार्थदर्शनम् ईशानां देवतां ख्यापयति, इन्द्रो दिव इन्द्र ईशे इत्येवमादीनि । तत् प्रत्यक्षाम् अनीशानां देवताम् उपलभ्य अध्यवस्यामः, भाक्त एष शब्दः इति । तत्र आह, वचनप्रामाण्यादेव अस्य ईशानता अवगम्यते, यद्देवलोका अर्थान् विनियुञ्जते, तद्देवताभिप्रायादेव-इत्यध्यवस्यामः इति । तत्र, प्रत्यक्षात् प्रमाणात् देवतापरिचारकाणाम् अभिप्रायः इत्यवगम्यते, स न शक्यो बाधितुम्, येऽपि देवताम् ईशानां वर्णयन्ति, तेऽपि न अपह्नुवते परिचारकाणाम् अभिप्रायम् । किं चाहुः, तथा देवता करोति, यथा परिचारकाणाम् अभिप्रायो भवति इति, न च, स ईशानो भवति, यः पराभिप्रायम् अनुरुध्यते, यस्य न स्वाभिप्रायात् विनियोगो भवति ।

अपि च, न च एतद्वचनं, वर्त्तमानकालोपदेशत्वात्, प्रत्यक्षविरोधात्, स्तुतिवादोऽवधार्य्यते, स्तुतिवादे च सम्भवति न वचनप्रामाण्यात् ईशिष्यते इति गम्यते । न च, देवता फलेन सम्बध्नाति, या तदर्थं परिचर्य्येत ।

यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैर्ददाति प्रसीदति च इति । तत्र स्मृत्युपचारयोरुक्तं, यत् अन्यार्थदर्शनं, तस्मै प्रीता इषमूर्जं प्रयच्छति इति । तत्र, अन्यस्य विधेराम्नानात्, दक्षिणतः सम्परिहर्त्तव्या इत्याह, इति, तथा दक्ष एवैनम् इन्द्र प्रजया पशुभिस्तर्पयति इति, अत्र ऐन्द्रस्य हविषो विधानम् । तस्मात् देवता न प्रयोजिका इति ।

## अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥ (यु० नि०)

यदुक्तम्, अतिथिवत् इति, तत् परिहर्त्तव्यम्। आतिथ्यम् अतिथिप्रयुक्तं स्यात्, आतिथ्ये हि तत्प्रीतिर्विधीयते, अतिथिः परिचरितव्यः, यथा प्रीयते, तथा कर्त्तव्यम् इति, दानं भोजनं वा कार्य्यम् इति, यद्यत् अतिथये रोचते, तत् कर्त्तव्यं, यत् तस्मै न रोचते, न तत् बलात्कारयितव्यम् इति; इह तु कर्म्मणि अभावः प्रीतिविधानस्य। तस्मात् विषमम् अतिथिना इति। (८।१।४ अ०)।

---

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम्।

## द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥११॥ (पू०)

दर्शपूर्णमासयोः आमनन्ति व्रीहीन् प्रोक्षति इति, तत्रैव त्रीन् परिधीन् तिस्रः समिधः इति मन्त्रम्। चतुर्होता पौर्णमासीमभिमृशेत् पञ्चहोता अमावास्याम् इति चतुर्मास्यानां द्वितीये पर्वणि वरुणप्रघासेषु आम्नायते, सूर्पेण जुहोति तेन हि अन्नं क्रियते इति। तत्र संशयः, किं द्रव्य संख्या-हेतु-समुदायप्रयुक्ताः प्रोक्षणादयो धर्म्मा उत अपूर्वप्रयुक्ताः? इति। किं तावत् प्राप्तम्? द्रव्यादिप्रयुक्ताः इति, इह व्रीहीन् प्रोक्षति इति प्रकरणेन अपूर्वप्रयुक्तता स्यात् वाक्येन द्रव्यप्रयुक्तता, द्रव्येण हि प्रोक्षणस्य

समभिव्याहारः, तस्मिन्नपि समभिव्याहारे द्रव्यगता द्वितीया विभक्तिः प्रोक्षणस्य द्रव्यप्रयुक्ततां वदति।

तथा, त्रीन् परिधीन् इति, यत् त्रिशब्दस्य अभिधेयं, तत् इह मन्त्राम्नानसामर्थ्यात् वदितव्यम् इति गम्यते। सङ्ख्या स त्रिशब्दस्य अर्थः, तस्याः श्रुतिर्वाचिका, तत्सम्बद्धे अपूर्वे लक्षणा स्यात्,। यावन्तः परिधयः, तावन्तो वक्तव्याः इति।

तथा हेतुना धर्म्मः संयुज्यते वाक्येन, सूर्पेण जुहोति इति। किंकारणम्?। यतः तेन अन्नं क्रियते, तद्धोमेन सम्बद्धव्यमन्नकरणद्रव्यं होमे विधीयते। प्रकरणात् अपूर्व-प्रयुक्तता स्यात्, यस्मात् अनेन होमेन अपूर्वं क्रियते, तस्मात् एतत् सूर्पेण निर्वर्त्तयितव्यम् इति, प्रकरणात् वाक्यं बलीयः, अतः प्रकरणं बाध्येत, येन येन द्रव्येण दर्वि-पिठरादिनाप्यन्नं क्रियते, तेन तेन होमः कर्त्तव्यः इत्येवम् अन्नकरणं सगुणं भवति इति।

ननु प्रथमे अध्याये प्रतिषिद्धा हेत्वर्थता, सूर्पस्य अर्थवादोऽयम् इत्युक्तम्। सत्यम् उक्तम्, अपूर्वप्रयुक्ततायां हि सिद्धायां न एकस्मिन् वाक्ये होमे सूर्पविधानं, हेतुविधानं च अवकल्पते इत्यर्थवादः प्रकल्पते, न अन्यथा। चतुर्होत्रा पौर्णमासीम् अभिमृशेत् पञ्चहोत्रा अमावास्याम् इति समुदायसमभिव्याहारात् वाक्येन तत्प्रयुक्तता, प्रकरणसामर्थ्यात् लक्षणया अपूर्वसमभिव्याहारात् अवगताम् अपूर्वप्रयुक्ततां बाधते। तस्मात् द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्माः।

## अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥१२॥ (यु०)

अपूर्वप्रयुक्ते एवञ्जातीयके धर्मे सति द्रव्येण च धर्म-व्यवस्था न स्यात्, पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रमाज्येन पात्नीवतम् इति। यस्मात् मैत्रावरुणोऽपूर्वस्य, तस्मात् पयसा श्रयितव्यः इति, ऐन्द्रवायवोऽपि अपूर्वस्य, सोऽपि पयसा श्रयितव्यः प्राप्नोति। एवं सर्वाणि श्रयणादीनि सर्वेषां ग्रहाणाम्। तत्र मैत्रावरुणादिग्रहणम् अविवक्षितं स्यात्। तस्मादपि द्रव्यादिप्रयुक्ताः प्रोक्षणादयः इति।

## अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। न द्रव्यादिप्रयुक्ता भवेयुः किन्तर्हि अर्थः एषां प्रयोजनम्, अर्थः इति अपूर्वं ब्रूमः। तदर्थास्ते, तद्धि कर्त्तव्यतया श्रूयते, यच्च कर्त्तव्यतया श्रूयते, तत् इतिकर्त्तव्यतया अनुबध्यते, इतरेषां द्रव्यादीनां कर्त्तव्यतया न चोदना, किन्तर्हि? अर्थस्य गुणभूतत्वेन, अर्थं प्रति अपूर्वं प्रति गुणभूतानाम् एव श्रवणम्। किमतः?। यद्येवम्, अकर्त्तव्यानाम् इतिकर्त्तव्यतया नास्ति सम्बन्धः इति।

ननु व्रीह्यादिसमभिव्याहारात् तर्हि सम्बन्धः, तत्र द्वितीयया व्रीहिसमुदायप्रयुक्तता गम्यते, लिङ्गवाक्याभ्याम्

सङ्ख्याहेतुप्रयुक्तता। न इत्याह, एवं सति फलं कल्पनीयं स्यात्, तस्मात् अपूर्वप्रयुक्तता।

ननु एवमपि सति अपूर्वोपकारः कल्पयितव्यः। सत्यं, कल्पयितव्यः, प्रकृतेनतु एकवाक्यतां नीत्वा, त्वत्पत्ते त्वप्रकृतेन फलवचनेन एकवाक्यता स्यात्।

ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम्। सत्यम् अबाधकं, फलाभावात्तु भवदीयः पक्षो मुच्यते, तस्मिन् आनर्थक्येन अविवक्षिते प्रकरणवता प्रयोगवचनेन अपरिपन्थि प्रोक्षणादि विधायिष्यते। आह, अपूर्वसम्बन्धेऽपि तदीयैः व्रीह्यादिभिः एष धर्मः प्रयुज्यते, किम् एतत्। किम् एवं भविष्यति ?। द्रव्यादिसम्बन्धश्च एवं हि न अवज्ञातो भविष्यति, फलं च न कल्पयितव्यम्। उच्यते, नैवं शक्यं, व्रीहीन् प्रोक्षति इति हि व्रीहिजातिर्निर्दिश्यते, व्रीहिद्रव्यलक्षणार्था वा, अपूर्वसाधनविशेषलक्षणार्था वा। अन्यतरलक्षणया कृतार्था इति न उभयलक्षणार्था स्यात्, द्रव्यलक्षणे वा। तत्र च लक्षणैव दोषः, फलकल्पना-इति कृत्वा साधनविशेषलक्षणार्था जातिः अवसीयते, व्रीहिजातिलक्षितं यत् साधनं, किं तत् ? यतः तण्डुला भवन्ति, तत् प्रोक्षितव्यम् इति तण्डुलनिर्वृत्तिकरता हि तत्र साधनत्वं, न द्रव्यता। एवं सङ्ख्यादिष्वपि योजयितव्यम्। तस्मात् अपूर्वप्रयुक्तता प्रोक्षणादीनाम् इति।

## अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ (पू॰ नि॰)

अथ यदुक्तम्, अर्थकारिते च द्रव्येण न व्यवस्था स्यात्

इति, साधनविशेषलक्षणार्था जातिः इत्येवं सति व्यवस्था भविष्यति, मैत्रावरुणेन यत् क्रियते, तत्र पयःश्रपणं, न तत् ऐन्द्रवायवेन। अतो न मैत्रावरुणापूर्वात् ऐन्द्रवायवस्य धर्माः, अपूर्वो हि ऐन्द्रवायवः। तस्मात् अपूर्वत्वात् व्यवस्था स्यात् इति।

## तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥
(पू० यु० नि०)

यश्च मन्यते, द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्माः इति, तस्य सर्वविषयता धर्मस्य प्राप्नोति, येऽपि भक्तार्था व्रीहयः, तेऽप्येवं प्रोक्षितव्याः प्राप्नुवन्ति, न च एतत् त्वयापि इष्यते। तस्मात् अयम् अस्मिन् पक्षे दोषः इति।

## तद्युक्तस्येति चेत् ॥ १६ ॥ (आ०)

इति चेत् पश्यसि, सर्वविषयता धर्मस्य भविष्यति इति, तद्युक्तस्य प्रकरणयुक्तस्य भविष्यति। एवं प्रकरणम् अनुगृह्यते, न च सर्वविषयता धर्मस्य इति।

## नाश्रुतित्वात् ॥ १७ ॥ (आ० नि०)

नैतदेवम्, न हि श्रूयते, करणयुक्ता व्रीहयो निर्वप्तव्याः प्रोक्षितव्याश्च इति। ननु प्रकरणानुग्रहाय एतदध्यवसानम्। न इत्याह, न हि, वाक्येन बाधितं प्रकरणम् उत्सहते धर्मान् नियन्तुम्। अथापि न बाध्यते, तथापि न प्रकरणस्य विशेष्टुम् सामर्थ्यमस्ति, कर्त्तव्यतया हि तत् क्रियमाणं चोद्यते इति न प्रसिद्धसम्बन्धमिव विशेषण-

त्वेन। तस्मात् न प्रकृतयागविशेषितानाम् व्रीहीणाम् निर्वापः प्रोक्षणं वा चोद्यते इति ।

अधिकारादिति चेत् ॥ १८ ॥ (आ०)

इति चेत् पश्यसि, न प्रकरणं विशेषकं व्रीहीणाम् इति। बाढ़म्, अधिकारात् ज्ञास्यति अध्वर्युः, इमे भक्तार्थाः, इमे कार्य्यार्थाः, तत्र कार्य्यार्थान् प्रोक्षिष्यति इति ।

तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥ (सि०)

तुल्या एते व्रीहयः, ये एव भक्तार्थाः, ते एव कर्म्मार्थाः, न पृथक् केचित् कर्म्मार्था नाम। ननु ये निरुप्ताः, ते कर्म्मार्थाः। सत्यं भवेदेतत्, प्रोक्षणादिषु दोषो न स्यात्, निर्वापे तु दोषः, न तत्र केचन प्रकृता विद्यन्ते, पृथक्सतां यज्ञार्थेन निर्वापः श्रूयते। कथम्?। अपरेण गार्हपत्यं प्रागीषम् अनोऽवस्थितं भवति, तस्य दक्षिणं चक्रं आरुह्यानसोऽधि निर्वपति इति। तस्मात् धर्म्मस्य सर्वविषयत्वं प्राप्नोत्येव पूर्वेण हेतुना अपूर्वप्रयुक्तत्वं प्रोक्षणादीनाम् इति। (९।१।५ अ०)।

---

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ।

## देशबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्द्देशात्तस्य च तत्र भावात् ॥ २० ॥ (सि०)

ज्योतिष्टोमे समाम्नायते,त्वरा वा एषा यज्ञस्य, तस्मात् यत्किञ्चित् प्राचीनम् अग्नीषोमीयात्, तेन उपांशु चरन्ति इति। तदत्रैषोऽर्थः सांशयिकः, किं प्राक् अग्नीषोमीयात्, यानि कर्म्माणि, तत्प्रयुक्तम् उपांशुत्वम्, उत परमापूर्वप्रयुक्तम् ? इति। किं प्राप्तम् ? प्राक् अग्नीषोमीयात् यानि अङ्गापूर्वाणि आरादुपकारकाणि, यच्च प्रधानद्रव्यसंस्कारकं, तत्प्रयुक्तोऽयं धर्म्मः, योऽयं देशसम्बद्धः। कुत एतत् ?। श्रुतिनिर्द्देशात्, मर्य्यादया देशलक्षिता ये पदार्थाः, ते श्रुत्या एतेन धर्मेण सम्बद्धाः, ये एतस्मिन् देशे पदार्थास्तैः उपांशु चरन्ति इति।

ननु वाक्येन एष धर्मो विनियुक्तो न श्रुत्या। न ब्रूमः, न वाक्येन इति, किन्तर्हि श्रुतेन अस्य एकवाक्यता, न प्रकृतेन, लक्षितेन, कल्पितेन वा इति। उच्यते गृह्णीम एतदङ्गापूर्वाणाम् अयं धर्म्मः इति, न तु प्रधानद्रव्यस्य संस्कारकं यत् अपूर्वं तस्यापि इति। कतमं तत् ?। यत् प्रधानद्रव्यसंस्कारकं पूर्वस्मिन् देशे अस्ति इति। उच्यते, तस्य च तत्र भावात्, तस्य एवञ्जातीयकस्य पूर्वस्मिन् देशे भावात्। अस्ति हि सोमपरिवहणीयं नाम सूक्तम्। तस्मात् देशधर्मो भविष्यति इति। यथा प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सह विष्कृता विसृजति इति। अस्मिन् देशे

ये पदार्थाः, तेषां धर्मो वाग्यमो न प्रधानापूर्वस्य, एवम् इदम् अपि उपांशुत्वम् इति ।

## यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ (पू०)

वाशब्दात् पक्षो विपरिवर्त्तते । नैतदस्ति, तद्देशानाम् धर्मः इति । कस्य तर्हि ? परमापूर्वस्य इति । कुतः ? । तत्संयोगात्, तत्संयोगो भवति, यज्ञस्य संयोगः, त्सरा वा एषा यज्ञस्य यत् प्राचीनम् अग्नीषोमीयात् इति, यज्ञस्य यत् प्राचीनम् इति सम्बन्धः, न त्सरा वा यज्ञस्य इति । कुतः ? । प्राचीनं विशिंषन् यज्ञस्य इति शब्दो विधिपदशेषो भवति । ततः प्रवृत्तिविशेषकरो भविष्यति । इतरथा अर्थवादशेषः सन् अनर्थकः स्यात्, वादमात्रं हि अनर्थकम् इति । प्राचीनम् इति च यज्ञभागं श्रुत्या वदति, लक्षयति च तद्गतान् पदार्थान्, श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या स्यात् । तस्मात् प्राग्देशस्य एष धर्मः, तेन अस्य श्रुत्या संयोगः, न प्राग्देशगतानाम् पदार्थानाम् तैरस्य लक्षणया सम्बन्धः स्यात् ।

अथापि अर्थवादपदशेषो यज्ञस्य इति स्यात्, तथापि प्राग्देशः श्रुत्या धर्मेण सम्बध्यते, प्राग्देशगताः पदार्था लक्षणया इति यज्ञप्रयुक्तता एव न्याय्या ।

अपि च प्रत्यक्ष उपकारः परमापूर्वस्य लक्ष्यते, यत् प्राचीनम् अग्नीषोमीयात्, तत् उपांशुत्वेन शिथिलप्रयत्नः प्रचरन् अखिन्नः सुखं बहुवृत्तान्तं सौत्यम् अहर्निर्वर्त्स्यति । तस्मात् परमापूर्वप्रयुक्तम् उपांशुत्वम् इति ।

## अनुवादश्च तदर्थवत् ॥ २२ ॥ (पू० यु०)

अनुवादश्च तद्देशपदार्थस्यैव भवति, त्सरा वा एषा यज्ञस्य यत्प्राचीनमग्नीषोमीयात् इति, त्सरा नाम छद्मगतिः। यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति, शनैः पदन्यासो, दृष्टिप्रणिधानम्, अशब्दकरणञ्च, कथमनवबुद्धः शकुनिर्गृह्येतेति। एवमिहापि अनवबुद्धमिव ग्रहीतुं यज्ञं प्रच्छन्नगतिरुपांशुत्वं नाम। यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासो न स तद्देशार्थः, अपितु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते। एवमिहापि उपांशुत्वं न तद्देशानां पदार्थानामर्थेन क्रियते, तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते। यस्तु त्सराशब्दं यज्ञविशेष्यं मन्यते, तस्य सुतरामर्थवादः परमापूर्वप्रयुक्ततां दर्शयति, यज्ञस्यैषा त्सरेति। यथा शकुनेः त्सरा, एवं यज्ञस्येति।

## प्रणीतादि तथेति चेत् ॥ २३ ॥ (आ०)

इति यदुक्तं तत्परिहर्त्तव्यम्।

## न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ (आ० नि०)

नैतदेवं, तद्देशपदार्थप्रयुक्तैव स्यात्, न परमापूर्वप्रयुक्तेति। नात्र पदार्थानां यज्ञभागविशिष्टता वाक्यमसम्बन्धेन अवगम्यते, यज्ञस्याश्रुतित्वात्, नात्र सम्बन्धी यज्ञशब्दः श्रूयते। नन्विदानीमेवोक्तं, यज्ञं तनिष्यन्तो

मध्वर्य्युयजमानौ वाचं यच्छतः इति। उच्यते, तद्देशपदार्थ-प्रयुक्ततायामप्येतदवकल्पते। कथम्? यज्ञं विस्तारयितु, वाचं यच्छतः, तौ वाचंयमौ सन्तौ अविच्छिप्यमाणचेतस्कौ, पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्येते, यथा, न कश्चित् पदार्थः पदार्थावयवो वा हीयते, अध्वर्य्युर्वास्य-मेन अनन्यचेतस्कौ न पदार्थान् प्रमादयिष्यति। यज-मानश्चैवं वाग्यमेन अनन्यचेतस्कः प्रमादयिष्यन्तं तं बोध-यिष्यति। अङ्गैरप्यनन्तरीयमाणैः यज्ञो विस्तार्य्यते, न केवलैः स्वैरवयवैरङ्गैश्च विस्तारयितुं वाग्यमः शक्नोति, अस्मिन् काले क्रियमाणो न स्वेनात्मना। यज्ञसंयोगश्चाच विस्तारसम्बद्धः, तस्मादङ्गप्रयुक्ततायामप्युपपद्यते, यदध्वर्य्यु-यजमानौ वाचं यच्छतः, तत् प्रजापतिभूयङ्गतौ यज्ञं तन्वाते इति दृष्टेन कारणेन, न अदृष्टेन इति वर्त्तमान-कालापदेशादवगम्यते, यथा वयं वाग्यमेन तायमानं यज्ञं विद्यस्तथेति।

## तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २५ ॥
## (उ०)

स्थितादुत्तरम्। वाशब्दात् पक्षं विपरिवर्त्तयेत्, नैत-दस्ति, परमापूर्वप्रयुक्तमुपांशुत्वमिति, कथन्तर्हि? प्राची-नम् अग्नीषोमीयात्, ये पदार्थाः तत्प्रयुक्तम्। कुतः?। सङ्घातस्याचोदितत्वात्, सङ्घात इति ग्रहयज्यभ्याससङ्घातं ब्रूमः। न तस्यायं भाग उपांशुत्वेन सम्बद्ध इति चोदना। नैवं सम्बन्धः क्रियते, यज्ञस्य यत् प्राचीनमिति, कथं तर्हि?

त्सरा वा एषा यज्ञस्येति। कुतः?। तस्मादितिपदेन व्यवधानात्।

अथापि प्राचीनेन सम्बन्धः एवमपि न परमापूर्वप्रयुक्तम्, न हि यदित्यनेन देशोऽभिसम्बध्यते, किन्तर्हि? देशगताः पदार्थाः। यदि देशोऽभिसम्बध्येत, यत् प्राचीनमग्नीषोमीयादिति भवेत्, न यत्किञ्चिदिति, वीप्सायां हि एतद्भवति। वीप्सा च बहुषु भवति, नैकस्मिन्। एकश्च देशः, बहवस्तत्र पदार्थाः। तस्मात्पदार्थानामुपांशुत्वेन सम्बन्धो न तद्देशस्येति। कथं पुनर्वीप्साऽवगम्यते? इति। यदित्यनेन लक्ष्यते। किमित्यज्ञानवचनम्?। विशेषास्त्वाज्ञाताः ज्ञातुमिष्टाः प्रतीयन्ते, बहुषु च सामान्यं विशेषाश्च भवन्ति। तस्मात् तद्देशाः पदार्थाः वीप्सया लक्ष्यन्ते, ते च उपांशुत्वेन सम्बध्यन्ते इति।

ननु दीक्षणीयादिषु अन्यो धर्म उक्तः, यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, प्रायणीयायां मन्द्रतरमातिथ्यायाम् उपांशूपसत्सु इति। कथं तत्रोपांशुत्वं कर्त्तुं शक्यमिति?। उच्यते, स धर्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात्, उपांशुत्वम् प्रधानवर्जितेष्वङ्गेषु निविक्ष्यते, सामान्योपदेशात्।

प्रयोजनं, कुण्डपायिनामयने मासमग्निहोत्रं जुह्वति इत्येवमादीनि प्रागग्नीषोमीयात्, एष उपांशुत्वसम्बन्धी भवति, यथा पूर्वः पक्षः। यथा तर्हि सिद्धान्तः, न सम्बन्धः॥ (९।१।६ अ०)।

———

इष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम्।

## अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत्॥ २६॥ (पू०)

अस्ति अग्निः, य एवं विद्वान् अग्निं चिनुते इति। तत्रैव समाम्नायते हिरण्यशकलसहस्रेणाग्निं प्रोक्षति, दध्ना मधुमिश्रेणाग्निं प्रोक्षति, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति, मण्डूकेनाग्निं विकर्षति। तत्रायमर्थः सांशयिकः, प्रतीष्टकं किं विकर्षणं प्रोक्षणं च कर्त्तव्यम्, अथ सकृदेव कर्त्तव्यम्? इति। तच्चैवन्तावद्विचार्य्यते, किम् इष्टकासमुदायेऽग्निशब्दः, उत तद्व्यतिरिक्ते द्रव्यान्तरे? इति। यदि समुदाये, ततस्तत्सञ्चितानामिष्टकानाम् अगम्यमाने विशेषे सर्वासां प्रोक्षणं विकर्षणञ्च। यदा च द्रव्यान्तरे, ततः सकृदेवेति। किं प्राप्तम्? प्रतीष्टकम् इति। कुतः?। समुदाये हि अग्निशब्दो वर्त्तते। कथमवगम्यते?। द्रव्यान्तरस्याभावात्, द्रव्यान्तरमेवान्यत् नास्ति, कोऽग्निशब्देनाभिधीयेत? कस्मिन्नग्निर्निधीयेत? इति। कथं पुनर्नास्तीति गम्यते?। द्रव्यान्तरवैलक्षण्यात्, तत्र हि द्रव्यान्तरमस्तीति गम्यते, यत्रैकस्मिन् अवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते। कोऽभिप्रायः?। यद्येकोऽवयवो हस्तेन संयुक्तः कृष्यते, न द्रव्यान्तरम्। कः प्रसङ्गः?। यत्तत्र द्वितीयोऽप्यवयवः कृष्टेतेति। अथ द्रव्यान्तरमपि तत्र कृष्यते, तत्र द्रव्यान्तरस्य समवायिनां अवयवानामपि निर्भागात् कर्षणमुपपन्नम्। न च, संयुक्त-

संयोगस्य द्रव्यान्तरादृते धर्म एषोऽवकल्पते। न हि ग्रवद्धे काष्ठपूलके काष्ठे एकस्मिन्नाकृष्यमाणे काष्ठान्तराणि कृष्यन्ते। यत्र हि परस्पर-व्यतिषङ्गजनिता एका बुद्धि-र्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचित् अनुमानेन अनुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते, इह तु या एवे-ष्टका गृहीत्वा कृष्यते, सैवागच्छति, नेष्टकान्तराणि। सन्धिश्च लक्ष्यते, तेन नावयवसंस्यूतिरस्तीति गम्यते। तस्मा-न्नास्ति द्रव्यान्तरम्। तत्र इष्टकाभिरग्निं चिनुते इति चयनमात्रम् इष्टकाभिः कर्त्तव्यम्। न, चयनमात्रेण कृतेन किञ्चित् दृष्टमस्ति। तस्मादग्निनिधानार्थाना-मिष्टकानां चयनसमुदायोपलक्षितानामगम्यमाने विशेषे सर्वासामेव प्रोक्षणं विकर्षणं च कर्त्तव्यम्, पौर्णमासीवत्। यथा, य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमा-वास्यां यजते इति आग्नेयादय एव क्रियन्ते, नार्थान्तरं किञ्चित्। एवमिहापीति।

## अग्नेर्वा स्यात् द्रव्यैकत्वादितरासां तदर्थत्वात्॥ २७॥ (सि०)

वाशब्दात्पक्षो विपरिवर्त्तते। नैतदस्ति, प्रतीष्टकं कर्त्तव्यमिति, कथन्तर्हि? सकृदेवेति। तत एतद् वर्ण्यते, द्रव्यान्तरमिष्टकाभिः क्रियते, तत्राग्निर्निधातव्यः, तत्र चाग्निशब्दो वर्त्तते इति। कथम्?। परार्थैनेष्टकानां निर्देशात्, इष्टकाभिरग्निं चिनुते इति तृतीयया विभक्त्या

धारार्थमिष्टकानामवगम्यते । यदि चयनमात्रमचोच्यते, तत् इष्टकासंस्कारार्थमवगम्यते । तत्र द्वितीयया विभक्त्या संयोगः स्यात्, तृतीयया संयोगो बाध्येत । तस्मादिष्टकाभिः अन्यत् क्रियते, तत्राग्निर्निधातव्यः, तदर्थो इष्टकाचयनं वेति ।

आह, नन्वेतदुक्तं, तस्याभावादयमन्यः पक्षः परिगृह्यते इति । अत्रोच्यते, नाभावः, प्रत्यक्षा तत्रैकबुद्धिः, सा बह्वीषु इष्टकासु नावकल्पते । नच अवयवसन्धिर्दृश्यते पुरीषच्छन्नानाम् । तस्मात्पक्षामसंयोगेऽप्येकबुद्धेरुत्पादादेकम् इष्टकाभ्यो व्यतिरिक्तं द्रव्यम् अग्निनिधानार्थमस्ति । यदि वा इष्टकासंस्यूतिरप्येकबुद्धेरेवावगम्यते । यत्तु एकाकर्षणेन कृत्स्नाकर्षणम् इति । सत्यं, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्याणि, स्थावराणि जङ्गमानि च, तत्र स्थावरेषु विच्छेदो भवति । यथा, वनस्पतौ पर्णं गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते, स्थावरत्वात् । एवम् इदमपि, स्थावरं ह्रीदमग्निद्रव्यम् । तस्मात् सकृदेव प्रोक्षणं विकर्षणञ्च कर्त्तव्यमिति ।

## चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥ २८ ॥ (आ० नि०)

अथ यदुक्तं, य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इति, नात्र आग्नेयादिभ्यः किञ्चिदर्थान्तरं, तथा इहापि इति । उच्यते, युक्तं पौर्णमास्यां तथाभावः, चोदनासमुदायो हि तत्र कर्म, नच, कर्म-

साध्यं विद्यते, इह तु द्रव्यान्तरमस्तीत्युक्तम्। तस्माद्वैषम्यं पौर्णमास्येति। (८।१।७ अ०)।

---

उत्तमान्यानासङ्गां पत्नीसंयाजासंस्थाधिकरणम्।

## पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥ (पू०)

अस्ति अहर्गणः, द्वादशाहेन प्रजाकामं याजयेत् इति। तत्र श्रूयते, पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति। तत्रायमर्थः सांशयिकः, किं सर्वेषामङ्गां पत्नीसंयाजान्तत्वम्, उत प्रागुत्तमात्? इति। दशमं वर्जयित्वा सन्देहः क्रियते, तस्य हि मानसान्तता वचनेनोक्ता। किन्तावत् प्राप्तम्? सर्वेषाम् अङ्गामिति। कुतः?। अविशेषात् अविशेषेणोच्यते, पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति न च, कश्चिद्विशेष आश्रीयते, तस्मात् सर्वेषामिति।

## लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ (सि०)

वाशब्दः पक्षव्यावृत्तौ। प्रागुत्तमात् अङ्गः पत्नीसंयाजान्तता स्यात्। कुतः?। लिङ्गात्, लिङ्गं भवति, पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते न वहिरनुप्रहरति असंस्थितो हि तर्हि यज्ञः इति यस्मिन् अहनि असंस्थितो यज्ञस्तस्मिन् पत्नी संयाजान्ततां दर्शयति। कथम्?। हेत्वर्थेन असंस्था निर्दिश्यते, यस्मादिमानि असंस्थितानि

अहानि, तस्मादेषु पत्नीसंयाजान्ततेति। संस्थिति-श्चान्त्येऽहानि। अपिच, येषु अहःसु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते कीर्त्त्यमाना। तस्मादसंस्थायाः पत्नी-संयाजान्ततायाश्च सामानाधिकरण्यम्। असंस्थाञ्च प्रागुत्त-मात् दृष्ट्वा, प्रागुत्तमादेव पत्नीसंयाजान्ततामध्यवस्यामः।

## अनुवादो वा दीक्षा यथा नक्तंसंस्थापनस्य ॥ ३१ ॥ (आ०)

वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति, प्रागुत्तमात् पत्नीसंयाजान्तता स्यात् इति। किन्तर्हि? सर्वेषामवि-शेषात्। यदुक्तं, येषु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते। तस्मादसंस्थायाः प्रागुत्तमादह्नः पत्नीसंयाजान्ततां नियच्छामः इति। नैतदेवं, न ह्रीदं विधिमूलं दर्शनं, नान्यप्रमाणमूलम्, अतो मृगतृष्णारूपमेतद्दर्शनम्।

यदप्यसंस्था हेतुरिति, तदपि न स्यात्, उक्तं हि, स्तुतिस्तु शब्दपूर्वत्वात् (१।२।२३ सू०) इति। नच, सामा-नाधिकरण्यम् असंस्थापत्नीसंयाजान्ततयोः, पत्नीसंयाजा-न्तता सर्वेषामह्नां शब्देन गम्यते, असंस्था पुनर्न्यायेन प्रागुत्तमादह्नः। यदेतत् असंस्थितो हि तर्हि यज्ञः इति, अर्थवादः एष पत्नीसंयाजान्ततास्तुत्यर्थः, तथाहि असंस्थितो यज्ञश्चिरेण संस्थास्यते इत्यालोच्यते, यस्मात् चिरेण संस्था-स्यते तस्मादवलुप्यतां, पत्नीसंयाजान्तानि अहानि भव-न्त्विति, सन्तिष्ठमानेष्वेवाहःसु असंस्थावचनं पत्नीसंयाजा-न्ततप्रशंसार्थं, संस्थास्यन्ति हि तानि अहानि, अवभृथादय

एषां शेषाः पदार्थाः करिष्यन्ते। यथा दीक्षोन्मोचनवचनं नक्तसंस्थापनस्य अर्थवादः, एवमेतत् द्रष्टव्यम्। वरुणपाशाभ्यां वा एषो निधीयते यो दीक्षितोऽहोरात्रे वै वरुणपाशौ यद्दिवा संस्थापयेत् अनुन्मुक्तो वरुणपाशाभ्यां स्यात् नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते आत्मनो हिंसायाः इति, अनुन्मुक्तः स वरुणपाशाभ्यां, न तावद्दीक्षया मुच्यते, अवभृथो हि दीक्षोन्मोचनार्थः। अथवा उच्यते, वरुणपाशाभ्यामिव निर्मुच्यत इति बहवो नियमास्तदानीं विसृज्यन्ते, यान् आलोच्य एष वादो भवति। एवमिहापि चिरेण संस्थामालोच्य असंस्थितवचनं भवतीति।

## स्याद्वाऽनारभ्य-विधानादन्ते लिङ्गविरोधात्॥ ३२॥ (आ० नि०)

वाशब्दात् पक्षो विपरिवर्त्तते। भवेद्वा प्रागुत्तमात् पत्नीसंयाजान्तता, न हि आरभ्य उत्तमम् अहः, एष विधीयते, कथन्तर्हि? सामान्येन पत्नीसंयाजान्तानि अहानि भवन्तीति। तत्रान्ते लिङ्गविरोधो भवति। का पुनर्न्यायेन प्राप्तिः? इति। पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति, तेन एतत् उक्तं भवति, शिष्टमवलुप्यते इति, सन्तिष्ठन्ते नानुष्ठीयन्त इति, कर्त्तुर्व्यापार एषु उपरमतीति, तेषु सहक्रियमाणेषु अहःसु अवश्यं कस्मिंश्चित् पदार्थे अवस्थाय अवश्यम् अपरस्य अह्नः पदार्था अनुष्ठातव्याः। तत्रानियमे प्राप्ते पत्नीसंयाजान्ते

संस्थातव्यमिति नियस्यते। तस्यावस्थानस्यैतत् प्रयोजनं, कथम् अहरन्तरस्य पदार्थानुष्ठानेन यौगपद्यमनुगृह्येतेति, एतद्धि दृष्टमवस्थानकार्य्यं, यस्मिन्नेतत् दृष्टम्, न शक्यं कल्पयितुं तत्रादृष्टम्। तत्र न पत्नीसंयाजान्तता, तच्चाल्यस्य प्रयोजनं न विद्यते। तस्मात् प्रागन्त्यात् पत्नीसंयाजान्ततेति न्यायेन प्राप्ते लिङ्गदर्शनम्, असंस्थितो हि तर्हि यज्ञः इति। (९।१।८ अ०)।

---

त्रिःप्रथमामन्वाह इत्यादिषु स्थानधर्म्मताधिकरणम्।

## अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्म्मः स्यात्॥ ३३॥ (सि०)

स्तो दर्शपूर्णमासौ, तत्र सामिधेनीः प्रकृत्योच्यते, त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह इति। तत्रैषोऽर्थः सांशयिकः, किम् ऋग्धर्म्म एषः, यत्र तत्रस्था प्र वो वाज त्रिरभ्यसितव्या, उत स्थानधर्म्मः, या अन्याऽपि प्रथममुच्यते, सा त्रिरभ्यसितव्या? इति। कुतः संशयः?। उभयोरुपपत्तेः यद्येवम् अभिसम्बन्धः क्रियते, या असौ उच्चारितानां सामिधेनीनां प्रथममुच्चारिता, सा त्रिरभ्यसितव्येति, ततः प्र वो वाजाया ऋचो धर्म्मः। अथैवं विज्ञायते, प्राथम्यसंयुक्तं त्रिः ब्रूयादिति, ततो वचनस्य स्थानधर्म्मता।

किन्तावत् प्राप्तम्? ऋचो धर्म्म इति। कुतः?। प्राथम्यस्य व्यक्त्या सम्बन्धात्, व्यक्तेरभ्यासेन। कथमव-

गम्यते ?। स्त्रीलिङ्गनिर्देशात्, व्यक्तिविशेषो हि स्त्री नाम, यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेष-निर्देशोऽवकल्पते, साऽपि स्त्री अभ्यासेन सम्भंत्स्यते। अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति ततो व्यक्तिविशेषो न विवक्ष्येत, तत्र स्त्रीलिङ्गविशेषनिर्देशो नोपपद्यते। अपि च वाक्यभेदः प्रसज्येत, प्रथममुक्तां त्रिरभ्यसितव्यं, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति। मत्पक्षे पुनः प्राथम्यलक्षिताया ऋचो धर्म उच्यते, तत्रैकार्थविधाने न भवेद्वाक्यभेदः। अपिच श्रुत्या प्राथम्येन स्त्री सम्बध्यते, वाक्येनाभ्यासः। तस्मात् ऋग्धर्मो यत्र-तत्रस्था प्र वो वाजा त्रिरभ्यसितव्येति।

एवं प्राप्ते ब्रूमः, योऽयं सामिधेनीनां प्रथमायास्त्रिरभ्यास उच्यते, स प्रथमस्थाननिमित्तो धर्मः, न ऋचः कस्याश्चित् जातिनिमित्तः। कुतः ?। न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचित् ऋक् विद्यते, या त्रिरभ्यस्येत, तत्र प्राथम्यम् ऋग्लक्षणार्थं स्यात्, इतरस्मिन् पक्षे श्रुतिर्न लक्षणा, श्रुतिश्च ज्यायसी लक्षणायाः। तस्मात् अस्मत्पक्षः।

अथ यदुक्तं, स्त्रीलिङ्गसम्बन्धादस्मत्पक्ष एव श्रुतिः, वाक्यं च न भिद्यते, स्त्रीलिङ्गोपपत्तेश्चेति। अत्रोच्यते, गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति अविशिष्यमाणायामपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गं, तत् आश्रयभूतं गुणस्य भवति। अविधित्सितेऽपि तस्मिन् लिङ्गविशेषनिर्देशोऽनुवादभूतो भवत्येव। यथा, शुक्लः

पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम् शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति। शुक्लां शाटीमानयेति। यद्यपि शाट्याद्यानयनं न विधीयते, शुक्लसम्बन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते, तथापि अनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव, शुक्लामानयेति, अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति। एवं च सति, यद्यपि प्राथम्यस्य स्त्रीलिङ्गसम्बन्धः श्रौतस्तथापि प्राथम्यस्यैवाभ्यासेन सम्बन्धो न लिङ्गस्य। यदि लिङ्गस्यैतेन सम्बन्धोऽभिधीयते, प्राथम्यस्यानुवादता कल्प्येत। प्राथम्यसम्बन्धेऽप्यभिधीयमाने वाक्यं भिद्येत।

अपि च, नैवात्र विवदितव्यं, प्रातिपदिकविशेषणं हि स्त्रीशब्दः, स्त्रियां यत् प्रातिपदिकं वर्त्तते, ततः टाबादय इति, न विशेषणस्य पदान्तरेण सम्बन्धो भवति, यथा राजपुरुषो गच्छतीति। यदा तु प्राथम्यस्याभ्यासेन सम्बन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वं, यानि सामिधेनीषु वचनानि, ऋचस्ताः, स्त्रीलिङ्गश्च ऋक्शब्दः, तत्र यत् प्रथमं वचनं, तस्याश्रय ऋक्, गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, इत्यविशेषितायामप्यृचि स्त्रीलिङ्गं भविष्यतीति, यत् प्रथमवचनं, तत् त्रिराहेति, स्त्री च सा ऋक् सामिधेनी। तस्मात् त्रिः प्रथमामन्वाह इति प्राप्तस्य लिङ्गस्यानुवादः, त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते इति पञ्चदशानां सामिधेनीनां सम्पत्तये त्रिर्वचनम् उच्यमानं परिपूर्णाया ऋचो भवति, न ऋग-

इत्येवमादयः सूर्य्यं चक्षुर्गमयतादिति प्राणमन्ववसृजतात् इति। द्विपश्वादिषु पशुगणेषु किमूहितव्य उत, न? इत्युच्यते। ननु अन्यायनिगदत्वादेवायं नोहितव्यः, द्वयोश्चक्षुषोरेकवचनान्तो यतः श्रूयते। उच्यते, नायमक्ष्णोः अधिष्ठानयोः सूर्य्यगमनमाह, नहि अधिष्ठाने सूर्य्यं गच्छतः, तेजोरश्मिवचनस्त्वयं, एकञ्च तत्तेजः। तस्मान्न अयमन्यायनिगदः। द्विपश्वादिषु च वैकृतेषु प्रयोगेषु मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः इत्येवमादिषु पशुभेदात्तेजसो भेदे गम्यमाने ऊहः स्यादिति प्राप्नोति। ननु एकस्मिन्नपि पशावधिष्ठानभेदेन भिन्ने एव तेजसी। न इत्युच्यते, सूर्य्यमस्य चक्षुर्गमयतात इति यत् पशोस्तेजस्तत् हि विवक्षितं, नाधिष्ठानभेदः, पश्वन्तरेषु पशुतेजोभेदादूह इति।

एवं प्राप्ते ब्रूमः, संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्, संसर्गिषु अर्थेषु यद्यपि पशुभेदस्तथापि रश्मीनां संसर्ग एवैकीभूतास्तेषां रश्मयः, यथैव पानीयस्य तैलस्य घृतस्य वा स्तोका नानादेशेषु भिन्नाः समानदेशे एकीभूता भवन्ति तद्वद्रश्मयः, तस्मादेकवचनान्तस्तेषां वाचक इत्यनूहः स्यात्।

## लिङ्गदर्शनाच्च ॥ २८ ॥ (यु०)

लिङ्गं खल्वपि भवति, यथा संसर्गिणो न ऊह्यन्ते इति, न माता वर्द्धते न मज्जा न नाभिः प्राणो हि स इति

प्राणस्य सिद्धमनूहं हेतुत्वेनोपदिशति, तस्मात् संसर्गिणो नोह्यन्ते इति। (९।३।१०)।

---

द्विपशुयागे दध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम्।

## एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात्॥ २९॥ (सि०)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति तत्राध्रिगुप्रैषे समाम्नायते, एकधाऽस्य त्वचमाच्छ्यतात् इति तद्विकृतौ द्विपश्वादिषु सन्दिह्यते, किमभ्यसितव्य:, उताविकारेण प्रयोक्तव्य:? इति। किं प्राप्तम्? एकधेत्ययमभ्यसितव्य:। कुत:?। एकसंयोगात् एकस्त्वच: प्रकार: आच्छता कर्त्तव्या इति, तत्र द्वयोर्बह्वीषु वा त्वक्षु उत्कृत्यमानासु नैक: प्रकारो भवति, पर्य्यायेण हि तां पशुभ्योऽपाच्छन्ति एकस्यां त्वचि अपाच्छ्यमानायामेकेन प्रकारेणापाच्छेयुस्तस्मादसर्वविषयो भवति अविकृत: शब्द: प्रयुज्यमानस्तस्मादभ्यसितव्य: इति।

## अविकारो वा बहूनामेककर्मवत्॥ ३० (पू०)

वाशब्दात्पक्षो विपरिवर्त्तते, नैतदस्ति, अभ्यसितव्य इति, अविकारेण प्रयोक्तव्य इति। कुत:?। ऐकध्य-वचन एष शब्द:, एकीकुरु एषां त्वच: इति।

किं तत्र ऐक्यं एककालोपदेशो वा एकदेशोपदेशो वा ?। बह्नामेककर्मवत्. यथा बह्नामेककाले कर्माणि भवन्ति, एकधा गाः पाययति इति, एवमिहापि ऐकध्यं त्वचः कुरु इति, बह्नां तु एकीकरणं शक्यते कर्त्तुं, नैकस्यास्त्वचः। तस्माद्बह्वीषु त्वक्षु एकीकरणमेकधाशब्दो वदतीत्यवसेयम्।

## सकृत्त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात्॥ ३१ ॥ (उ०)

तुशब्दः पक्षं व्यावर्त्तयति, नाविकारः, अभ्यसितव्यः शब्द इति, एककाले कर्मण्यभिधीयमाने सहत्वं त्वचामभिहितं भवति, तत्प्रकृतावेकस्यान्त्वचि असम्भवात् अनभिप्रेतं तत्प्रकृतित्वात् उत्तरासान्ततीनां परेषु वर्द्धमानेषु पशुषु अभ्यासेन अभिधानं स्यात्। (८।२।११अ०)।

---

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम्।

## मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात्॥ ३२ ॥ (१म पू०)

अस्ति ज्योतिष्टोमेऽग्नीषोमीये पशावध्रिगुप्रैषे मेधपतिशब्द एकवन्निगदः, परेषां शाखिनां द्विवन्निगदः। तं प्रति संशयो भवति, द्विपश्वादिषु पशुगणेषु किमविकारेण

इतरश्चेतरश्च प्रयोक्तव्यः, उत स्वामिपर ऊहः कर्त्तव्यः, उत देवतापरः ? इति। किम्प्राप्तम् ? अविकारः। कुतः ?। मेधपतित्वं स्वामिदेवतस्य, स्वामी मेधपतिर्देवता च, स्वामिना पशुर्देवताभ्यान्दत्तः सङ्कल्पितः, मेधपतये स्वामिनेऽप्यसौ भवति, तस्य कार्य्यं करिष्यतीति। देवताभ्यामपि ताभ्यामुत्सृज्यते इति। त्रयाणामपि हि तं मेधं प्रति आधिपत्येन समवायोऽस्ति, सर्वत्र च आधिपत्ये पतिशब्दः प्रयुक्तः, आ हिमवतः, आ च कुमारीभ्यः, स एष त्रयाणां एकवचनान्तो वाचको द्विवचनान्तश्च, यथा प्रकृतावविवक्षितैकत्वोऽविवक्षितद्वित्वश्च सम्बन्धमात्रनिबन्धनः, एवं सर्वासु विकृतिषु। तस्मान्न विक्रियेत।

## अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् ॥ ३३ ॥ (२य पू०)

अपि वा नैतदेवं, तयोरिह समवायः, एकवन्निगदस्य, द्विवन्निगदस्य च। तयोरेकवन्निगदः स्वामिनि प्रयोक्ष्यते, येषां समाम्नातः। येषां द्विवन्निगदः समाम्नातस्तेषां सद्देवते वक्ष्यति। तस्माद्विकृतौ बह्वीषु देवतासु द्विवन्निगद ऊहेन प्रवर्त्तिष्यते, यजमानेष्वेकवन्निगद ऊहिष्यते। एवं यथासंख्यं प्रयोगो भविष्यति।

## स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्यां द्वितीयशब्दः स्यात् ॥ ३४ ॥ (३य पू०)

वाशब्दः पक्षं व्यावर्त्तयति, स्वामिदेवतयोरुभयोर्वाचक इति, नैतदेवं, एक एव मेधपतिशब्दः। यस्मात् द्विवचनं,

यस्मात् एकवचनं, स एव न स्वामिदेवतयोर्वाचको भविष्यति। नन्वेकोऽपि मेधपतिः अपरोऽपि प्रतीयते, कथमवाचक इत्युच्यते। यदा स्वामिनस्तदा मेधपतये यो मेधस्तं मेध्यादुर उपनयतेति सम्बन्धः, यदा देवतावचनस्तदा मेधपतये उपनयत मेध्यादुर इति सम्बन्धः, स एष सकृदुच्चरित उभाभ्यां पदार्थ्यां न सम्बन्धुमुत्सहते, वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते। तस्मात् स्वामिनो वाचक इति अध्यवसीयते।

अथ किमर्थं न देवतावचनः कल्प्यते?। तथा हि कल्प्यमाने एकवन्निगदे उत्कृष्येत एकदेवत्यः क्रतुः, तत्र प्रकरणं बाध्येत। यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत, तत्रैव यजमानयोर्दम्पत्योर्वाचको भविष्यति, तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते, स्वामिपरग्रहो भविष्यतीति।

## देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात् स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति, न स्वामिवचनो देवतापरो भविष्यति। कुतः?। तदाशीष्ट्वात् आशासाना मेधपतये मेधमिति देवताभ्यां हविराशास्यते, मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्याम् इति यजमानं प्रत्याशासानानुकीर्त्तनमनर्थकम्, अकर्त्तव्यञ्च, स प्राप्त एव स्वामिनं, मेधः किमर्थमाशास्यते। न च तेन नित्यमेव स्वामिसम्ब-

द्वेन प्रयोजनम्। याग एव हि न संवर्त्तेत। तस्माद्देवता-वचनो मेधपतिशब्द इति।

**उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात्।**

**३६ ॥ (यु०)**

उत्सृष्टश्च यजमानेन नायं ममेति, केवलं परकीयो रच्यते, कालेन देवतया सम्भंत्स्यते इति। कः पुनरस्य देवतया सम्बन्धः ?। यत्तामुद्दिश्य परिग्रहोऽस्य त्यज्यते, स च यागात् प्राक्तनः, तस्मात् यागात्परार्थं द्रव्यं नात्मीयं परित्यज्य आस्ते, आत्मप्रधानं यत्तदात्मीयं, न यं प्रति आत्मा गुणभूतस्तादृशेषु भक्त्या पतित्वं भवति। तस्मात् देवतयोरेव तत्र मुख्यं मेधपतित्वं, भाक्तं स्वामिन इति।

**उत्कृष्येतैकसंयुक्तो द्विदेवते सम्भवात् ॥ ३७ ॥**

**(आ०)**

इति यदुक्तं तत्परिहर्त्तव्यम्,

**एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥ ३८ ॥**

**(आ० नि० १म)**

अत्रोच्यते, यौ हि तौ द्वावग्नीषोमौ तयोर्गणे मेधपति-शब्दः, सचात्र देवतासमवेतस्तस्मिन् कर्म्मणि एकस्मै गणाय मेध उपनयत इत्युच्यते। तस्मादेकवचनात्तो गणवाची मेधपतिशब्दो नोत्कृष्यते इति।

## संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३६ ॥
(आ० नि० २य)

अयं चान्यः परिहारः, संसर्गी अयमर्थो देवता नाम, द्वौ अर्थौ संसृष्टौ कदाचिदेका देवता भवति। यदि द्वयात्र परिकल्पितं किञ्चित् द्रव्यं, तत्र द्वयं देवता भवति, द्वावर्थौ संसृष्टौ एकतां यातः। तस्मादेकवचनान्तोऽपि प्रकरणमभिनिविशते पूर्वेण च सह विकल्पेत इति।

## एकत्वेऽपि गुणानपायात् ॥ ४० ॥ (यु०)

अन्वारुह्य वचनमिदं, मा तावत् भूदिहैकत्वमर्थः, तथापि प्रकरणमनुप्रविशेतैव एकवचनान्तः, प्रातिपदिकं हि तस्य विद्यमानार्थम्, एकवचनञ्चोपनयनसम्बन्धार्थम्, एकत्वं वाऽविवक्षितम्। तस्मान्न प्रकरणादुत्कृष्येत इति। अथोच्यते, एकत्वविशिष्टस्य विभक्तिः सम्बन्धं ब्रवीति इति। तथाप्यस्मत्पक्ष उपपद्यतेतरां, सर्वोऽपि ह्येकत्वसम्बद्ध इति। अथ सम्बन्धं करोति एकत्वञ्च ब्रवीतीति। न तेन विशिनष्टि अविवक्षितत्वादविरुद्धं भविष्यति इति। अथोच्यते, अविवक्षितेऽपि वचने एकत्वसम्बन्धे एकवचनं भवति नान्यथेति। तथा मेधपतिगतमेकत्वमस्य भविष्यति, ततः सोऽनुवदिष्यते तस्माददोष इति। (६।३।१२ अ०)।

——

बहुदैवत्य पशावपि एकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम्।

## नियमो बहुदैवते विकारः स्यात् ॥ ४१ ॥ (पू०)

अस्ति बहुदैवत्यः पशुः, स एतान् पशूनादित्येभ्यः कामाय आलभेत इति। तथा वैश्वदेवं धूम्रमालभेत इति। अस्ति तु प्रकृतौ अग्नीषोमीये द्विवन्निगद एकवन्निगदश्च मेधपतिशब्दः चोदकप्राप्तः सन्दिह्यते, किं द्विवन्निगद ऊहितव्यः, एकवन्निगदो निवर्त्तेत, उत उभावपि परस्परेण विकल्पमानौ निविशयाताम्? इति। किं तावत् प्राप्तम्? द्विवन्निगदः समवेताभिधायित्वात् ऊहितव्यः, एकवन्निगदोऽशक्नुवन्नभिधातुमित्येतावता दर्शनेन निवर्त्तेत एष नियमः। आह, ननु प्रकृतौ द्वित्वस्याविवक्षितत्वाद्विकारेण प्रयोगः प्राप्नोतीति। उच्यते, अविशेषकमत्र द्वित्वं नतु तत्र समवेतन्न गम्यते, न च गम्यमानं निष्प्रयोजनम्, अन्यसंख्यापरिच्छेदेन पुनः संख्येयमुपस्थापयति, तदस्य दृष्टमेव प्रयोजनम्। तस्माद्बहुष्वप्यूहो भवतीति।

## विकल्पो वा प्रकृतिवत् ॥ ४२ ॥ (सि०)

यदुक्तं द्विवचनान्त ऊहितव्य इति, तत् गृह्णीम, यत्त्वेकवचनान्तो निवर्त्तेतेति तन्न, एकवचनान्तोऽपि प्रकृतिवदिह द्विवचनान्तेन विकल्पितुमर्हति। उक्तं हि गणाभिप्रायन्तत् प्रकृतौ, संसर्गित्वाद्वा देवतानामिति, तद्वदिहापि गणाभिप्रायात् संसर्गित्वाद्वा देवतानां विकल्पेन निवेक्ष्यते इति। (६।३।१३ भ०)।

———

एकादशिन्याम् एकवचनान्तमेधपतिशब्दस्योहाधिकरणम्।

अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसम्-
वायात् स्यात् ॥ ४३ ॥

अस्त्येकादशिनी, प्रैषाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन इत्येवमादि। अस्ति च प्रकृतौ अध्रिगुप्रैषे एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः, तस्येह चोदकप्राप्तिश्चिन्त्यते, द्विवन्निगद ऊहितव्य एव, अथैकवन्निगदः किमविकारेण प्रवर्त्तेत, उत निवर्त्तेत ?। किं प्राप्तम् ? विकल्पो वा प्रकृतिवत् इति। एवं प्राप्ते ब्रूमः, विकार एवैकादशिन्यां न विकल्पः, तत एकवचनान्तेन निवर्त्तितव्यम्। कुतः ?। देवतापृथक्त्वात्, पृथगत्र देवता, अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवं, नात्र गणो देवतात्वेन, तदभावात् संसर्गित्वमपि नास्ति। प्रकृतौ च एतद्द्वयं कारणं, एकवचनान्तस्य निवेशे न तदभावादिहास्ति प्रवृत्तिः। यच्चोक्तम्, एकत्वेऽपि गुणानपायादिति, परपक्षमन्वारुह्य तद्वचनं न स्वपक्षः तस्माददोष इति। (९।३।१४ अ०)।

इति आचार्य्यशवरस्वामिनः कृतौ मीमांसाभाष्ये
नवमस्य अध्यायस्य तृतीयः पादः।

———

## मीमांसा दर्शने

## नवमाध्यायस्य चतुर्थः पादः ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्तोहाधिकरणम् ।

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ (१म पू०)**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्राध्रिगुप्रैषे इदमाम्नायते, षड्विंशतिरस्य वङ्क्रयः इति । तच्चोदकेन द्विपश्वादीन् पशुगणान् संप्राप्तम् । मैत्रं श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामः इत्येवमादिषु अयमर्थः सांशयिकः, किं षड्विंशतिशब्दोऽभ्यसितव्यः, किमविकारेण प्रयोक्तव्यः, किं वचनमात्रमूहितव्यम्, अथ अस्य पदाभ्यासः, उत समस्य वचनम् ? इति । किं प्राप्तम् ? षड्विंशतिशब्दोऽभ्यसितव्यः, द्विपश्वादिषु पशुगणेषु प्रकृतावेकस्य पशोः षड्विंशतिर्वङ्क्रय उक्ताः, इह स गुणः प्रविभक्तः, पशौ पशौ षड्विंशतिर्वङ्क्रयः, तत्र यदि अविकारेण प्रयुज्येत, न कृत्स्ना वङ्क्रीर-

भिवदेत्। अथ समस्य वचनं क्रियते, तथा षड्विंशति-शब्दो निवर्त्तेत, तत्रार्षं बाधितं स्यात्। नच सर्वाभिर्व-ङ्क्रिभिः पशोः सम्बन्धोऽस्ति। पशुद्वयस्य ताभिः सम्बन्धः, नच पशुद्वयं पशुः।

ननु पशोः कार्य्यं यः पशोः स्थाने, स वङ्क्रिभिः सम्बन्धयितव्यः, तथा हि प्रकृतौ वचनं कृतं, समस्ताभि-र्वङ्क्रिभिः पशुद्वयस्य सम्बन्धे कृते एकैकस्य षड्विंशत्या सम्बन्धः प्रत्यायितः स्यात्। अत्रोच्यते, नैवं, प्रकृतौ साचात् षड्विंशत्या पशुसम्बन्धः, इह परसंख्यया सम्बन्धे क्रियमाणे परोचयाऽवयवसंख्या सम्बन्ध आनुमानिकः स्यात्। न च नियोगतः षड्विंशत्या एकैकस्य सम्बन्धः प्रत्यायितः स्यात्, पञ्चविंशतिरेकस्य सप्तविंशतिरेकस्येदृश-मपि तत्र गम्येत, न चैवं प्रकृतावभिधानं कृतं, तस्मा-दध्यसितव्य इति।

## अभ्यासेऽपि तथेति चेत् ॥ २ ॥ (आ०)

इति चेत् भवान् पश्यति, समासवचने अप्राकृतः शब्द उच्चरितो भवति इति। अभ्यासेऽपि अनभ्यस्तं प्रकृतौ वचनम्, इह साभ्यासमप्राकृतं स्यात्।

## न गुणादर्थकृतत्वाच्च ॥ ३ ॥ (आ० नि०)

नैष दोषः, गुण एष शब्दस्याभ्यासो नाम, स मत्पचे-ऽप्राकृतः, त्वत्पचे पुनः शब्द एव, अङ्गगुणाविरोधे च तादर्थ्यादित्युक्तम्। अर्थाच्च मयैतदश्रुतमुपादीयते, प्रवि-

भक्तं गुणं वक्तुं, यच्च श्रुतचिकीर्षयाऽश्रुतं क्रियते, दृश्यते एव तदस्माभिः तस्माददोषः।

## समासेऽपि तथेति चेत् ॥ ४ ॥ (आ०)

इति चेत् पश्यसि, अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति, कार्त्स्न्येन वङ्क्रयो वक्ष्यन्ते इति, समासेऽपि चोदकानुग्रहः, कार्त्स्न्येन वङ्क्रीणामभिधानात् अपि च समासवचने यौगपद्यवचनात् प्रयोगवचनोऽनुगृहीतो भविष्यति। तस्मात् समभ्यसितव्या वङ्क्रय इति।

## नासम्भवात् ॥ ५ ॥ (आ० नि०)

नैतदेवं, मम चोदकोऽनुगृहीतः षड्विंशतिशब्दप्रयोगात्, तव प्रयोगवचनः समस्य वचनात्, न च सम्भवति चोदके प्रयोगवचनं प्रत्यादर्त्तव्यं, बलीयान् हि चोदकः स हि धर्म्माणामुत्पादकः प्रापकश्च। प्रयोगवचनः प्राप्तानामुपसङ्ग्राहकः, स उत्तरकालेऽर्थविप्रकर्षात् दुर्बलः। तस्मादभ्यसितव्यं वचनमिति।

## स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ (यु०)

स्वाभिश्च वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ, इहापि तथैव उपलक्षयितव्यः, सोऽभ्यासवचने शक्यते, समासवचने हि परसङ्ख्या समुदायस्योक्ता भवति। तथा न स्वाभिः पशव उपलक्षिता भवन्ति, तस्मादसदेतत्।

## वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ (उ०)

तुशब्दः पक्षं व्यावर्त्तयति, नैतदेवम्, अभ्यसितव्यः षड्विंशतिशब्द इति, किन्तर्हि ? समस्य वदितव्या वङ्क्रय इति। कुतः ?। तत्र वङ्क्रीणां प्रधानत्वात्, प्राधान्यं हि तासां, प्रकृतौ षड्विंशतिरेता वङ्क्रयः इति अभिसम्बन्धः, तत्रेप्सितः षड्विंशतिरस्येति वङ्क्रयो गणिताः, न ताभिर्गणिताभिः पशुरुपलक्षितः। किंकारणम् ?। वङ्क्रीभिर्गणिताभिर्दृष्टं प्रयोजनं कृत्स्नं पार्श्वमुद्धरिष्यति इति, न तु वङ्क्रीभिर्गणिताभिः पशावुपलक्ष्यमाणे किञ्चित् दृष्टमभ्यधिकं भवति, तस्मान्न पशुसम्बन्धो विवक्षितः, एवं प्राधान्यं वङ्क्रीणाम्, अघ्रिगोः, वङ्क्रार्थत्वान्न तस्य सङ्ख्यापशुसम्बन्धः प्रयोजनम्। तस्मात्समस्य-वचनं कर्त्तव्यम्, एतावत्त्वं प्रकृतौ उक्तमिति विकृतौ एतावत्त्वैव वक्तव्येति तस्मात्समस्य-वचनं कर्त्तव्यमिति।

## तासाञ्च कृत्स्नवचनात् ॥ ८ ॥ (यु०)

तासाञ्च वङ्क्रीणामिदं कात्स्न्यमुच्यते, न पशूनाम्, ता अनुष्ठ्योच्यावयतात् इति, षड्विंशतिवङ्क्रयस्ताः प्रयत्नेन उद्धर्त्तव्या इति। इतरथा षड्विंशतिरस्य वङ्क्रयस्तं प्रयत्नेन किञ्चित् कुर्यादित्येवमभिसम्बन्धो भवेत्। यद्धि लक्ष्यते, तद्विकार्य्यसम्बन्धार्थं प्रतिनिर्दिश्यते। तदिह षड्विंशतिरस्य वङ्क्रयस्ताः इति वङ्क्रीणां प्रतिनिर्देशः कार्य्यार्थः। तस्मात्तासां प्राधान्यमिति।

## अपित्वसन्निपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ (पू० २)

अपिवित्विति पचव्यावृत्तिः। नैतदेवं, समसितव्या बङ्क्रय इति, किन्तर्हि ? अविकृतः षड्विंशतिशब्दः प्रयोक्तव्यः। कुतः ?। असन्निपातित्वात्, असन्निपाती ह्यध्रिगुः, न करणत्वेन निर्दिश्यते, यदि हि करणत्वेन निर्दिश्येत, ततोऽनेन प्रकाशितं कर्त्तव्यं, न ध्यानेनेति मन्त्रान्तेन कर्मसन्निपातः स्यात्। तत्राशक्यमविकृतेन यौगपद्यं कर्त्तुमिति विक्रियेत अभ्यस्येत वा। अथ पुनरेतद्करणं, क्रियमाणानुवादिनयनकालमध्रिगुवचनमनेकस्मिन् पशौ चोदकेनात्र निपतितम्। तत्रैषां स्वसङ्ख्यावतीर्वङ्क्रीरभिवदितुमशक्यं विप्रतिपत्तिरूपं तत्। तस्मान्न तद्वङ्क्रीणामियत्ता वदितव्या, किन्तर्हि ? षड्विंशतिसङ्ख्यायाःसम्बन्धः कर्त्तव्यः, यथा द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्द एकवचनान्तो न सङ्ख्यया पत्नीः परिच्छिनत्ति, किन्तर्हि ? एकत्वेन सम्बध्नाति एवमिहापि, तस्मादविकारेण प्रयोगः। एवमविकारे आर्षमनुगृहीष्यते इति।

## विकारस्तु प्रदेशत्वाद्यजमानवत् ॥१०॥ (उ०)

तुशब्दात्पचो विपरिवर्त्तते, नाविकारः, ऊहः कर्त्तव्य इति। यद्यत्सङ्ख्येषु आहत्य तत्सङ्ख्यो चार्य्यते, तत्र वचनप्रामाण्यात् विप्रतिपन्नसङ्ख्याकस्य शब्दस्य प्रयुज्यमानस्य अदृष्टोऽर्थोऽभ्युपगम्यते, यथा प्रकृतौ पत्नीशब्दस्य, न तु इहाहत्य षड्विंशतिशब्दोऽनेकस्मिन् पशौ प्रयुज्यते, किन्तु चोदकेनेह प्राकृतवचनं प्राप्यते। तत्र यत् न्याय्यं तत् चोदकः प्रापयिष्यति, नाहत्य षड्विंशतिशब्दम्। किं

तत् न्याय्यम् ? । यत् प्रकृतौ विवक्षितं, प्रकृतौ च वङ्क्रीणां वृत्ता कथिता । तस्मादिह सा प्रदिश्यते ।

नन्वेतदुक्तं नाध्रिगोः करणत्वेन निर्देश इति, यदा च न करणं, तदा कथमयं वङ्क्रीयत्तावचनः, श्रुत्या षड्विंशतिसङ्ख्यावचन एव भवितुमर्हति इति । उच्यते, यद्यपि नास्य तृतीयया निर्देशः, तथापि प्रयोगवचनेनोपगृहीतः साधको भवन् कमन्यं दृष्टमुपकारं करिष्यति, अन्यतोऽवदानप्रकाशनात् । अत्रोच्यते, नास्यावदानैरभिसम्बन्धः प्रकृतियागप्रयोगवचनो यागेन सम्बध्नाति, तत्र च हविष्कङ्कीर्त्तनं दृष्टं प्रयोजनं, षड्विंशतिशब्दोऽपि तत्स्तुतये भविष्यति इति । नैतदेवमिति ब्रूमः, प्रकरणात् यागमात्रेण अभिसम्बन्धे सति ऋत्विजां प्रैष इति गम्यते । लिङ्गात्तु शमितृप्रैषमिनमध्यवस्यामः । तथारूपाणि ह्यत्र वाक्यानि, दैव्या शमितार उपहृता मनुष्या आरभध्वम् इति । तथा षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतात् इति । तस्मात् वङ्क्रीयत्तावचन एष न षड्विंशतिसङ्ख्यावचनः । यथा यजमानपदे एकयजमानवाचिनि स्वसङ्ख्यामात्रकवचनमितिकृत्वा द्वियजमानके च प्रयोगे स्वसङ्ख्यावचनप्रदेशात् ऊहः क्रियते, एवमिहापीति ।

## अपूर्वत्वात्तथा पत्नग्राम् ॥ ११ ॥ (यु०)

यदुक्तं पत्नीवदिति, युक्तं पत्न्यां न तत्रैकपत्नीके यजमाने पत्नीशब्दः समाम्नातः, द्विपत्नीके बहुपत्नीके च प्रदे-

ग्रात् भवति। यथा एकस्याः पत्न्याः स्वसङ्ख्यावचनः, एवं द्वयोर्बहूनां च स्वसङ्ख्यावचन इति। तस्माद्वैषम्यं पत्न्याम्।

## आम्नातस्त्वविकारात् सङ्ख्यासु सर्वगामित्वात्॥ १२॥ (पू० ३)

तुशब्दोऽन्यं पक्षमवतारयति, न समस्य वचनं सङ्ख्येः स्यादिति, यथा समाम्नातं षड्विंशतिप्रातिपदिकं प्रयोक्तव्यम्, एवमविकारे आर्षानुग्रहो भविष्यति। प्रविभक्तं गुणमभिवदितुं वचनमूहिष्यते, षड्विंशती एतयोर्बहूनां इति। ननु षड्विंशती इत्यभिधाने बह्वीणां प्रथमा न प्राप्नोति। उच्यते, यदा षड्विंशतिगुणः प्राधान्येन विवक्षितो भवति, तद्विशेषणार्थं सङ्ख्येयमुच्चार्यते, तदा प्रथमान्तेनापि लक्षणया सङ्ख्या विशिष्यते, यथा इन्द्राग्नी देवते इति। यदा द्विवेरैश्वर्यकर्मणोऽर्थो गुणो विवक्षितो भवति, तदैकवचनान्तमेव इन्द्राग्नी इतिशब्दो लक्षणया विशिनष्टि। तथा च प्रयोगो दृश्यते, पञ्चपञ्चाशतस्त्रिवृत संवत्सराः पञ्चपञ्चाशतः पञ्चदशा पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः इति सङ्ख्यावचनः शब्दः त्रिवृत इत्यनेन लक्षणया विशिष्यते। यथा देवदत्तयज्ञदत्तविष्णुमित्राः पर्षदिति, एवं षड्विंशती बह्व्य इति। एवमविकारः भविष्यति, बहुगामी च षड्विंशतिशब्दो भविष्यति इति।

## सङ्ख्या त्वेवं प्रधानं स्याद्बह्व्यः पुनः प्रधानम्॥ १३॥ (उ०)

सत्यमुपपद्यत एव वचनं, षड्विंशती वङ्क्रय इति। सङ्ख्याप्रधानस्त्वेवन्निर्द्देशः कृतो भवति, षड्विंशतिगुणः प्राधान्येन विवक्षितः, तद्विशेषणत्वेन वङ्क्रीणामुच्चारणं, वङ्क्रयः पुनः प्रकृतौ प्रधानं, न सङ्ख्या, तदुक्तं, प्राधान्यमधिगोस्तदर्थत्वात्। तासाञ्च कृत्स्नवचनात् इति, तदेवं न प्रकृतिवदभिधानं कृतं भवेत्। तत्र चोदक एव बाध्येत। तस्मात्समसितव्यमेव वचनमिति।

## अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्द्देशः ॥ १४ ॥ (यु०)

न खल्वप्यस्मिन् पक्षे सर्वमेवाम्नातमुच्यते, अनाम्नातवचनमपि प्रतीयते इति षड्विंशती षड्विंशतय इति। अथ द्विवचनं बहुवचनं वा अनार्षं, तथा न क्रियते, न तासां वङ्क्रीणां कार्त्स्न्येनाभिधानं स्यात्।

## अभ्यासो वाऽविकारात् ॥ १५ ॥ (पू० ४)

वाशब्दः पक्षं व्यावर्त्तयति, न समासवचनम्, अभ्यासः स्यात्, एवमविकारो भविष्यति। तत्रार्षचोदकावनुग्रहीष्येते। सर्वं समाम्नातं कृतं भविष्यति। केवलम् अस्यशब्दोऽभ्यसिष्यते, कृत्स्नाश्च वङ्क्रयोऽभिहिता भविष्यन्ति।

## पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात्समासशब्दः स्यात् ॥ १६ ॥ (सि०)

तुशब्देनावधार्य्यते, नैतदेवं समस्य-वचनमेवेति। कथम्?।

एवं सति पशुः प्राधान्येनात्र निर्दिष्टः स्यात्, पशोः-पशोः षड्विंशतिः, षड्विंशतिर्वङ्क्रयः न कश्चित् अषड्विंशतिवङ्क्रिः पशुरिति पशोः सङ्ख्यासम्बन्धेऽभिधित्सिते एवं वचनं भवति। न च पशुसङ्ख्यासम्बन्धः प्रकृतौ विवक्षितः इति। उक्तमियत्ता वङ्क्रीणां प्रकृतौ वक्तव्या। इहापि सैव चोदकेन प्रदिश्यते। तेन नाभ्यासः कर्त्तव्यः, स हि पशुनिमित्तकः, तस्मात् समस्य-वचनं वङ्क्रीणां कर्त्तव्यमिति। (९। ४। १ अ०)।

---

चतुस्त्रिंशत्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशत्वङ्क्रि रूप-विशेषवचनाधिकरणम्।

## अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥२७॥

अस्त्यश्वमेधः, तत्र सवनीयः पशुः अश्वस्तूपरगोमृगौ च। अस्ति तु प्रकृतौ अग्नीषोमीये षड्विंशतिरस्य वङ्क्रयः इति वचनं, तदिह चोदकेन प्राप्तम्। तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः तूपरगोमृगयोः षड्विंशतिः, अस्ति तु ऋक् समाम्नाता, चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ता इति। तदिदं सन्दिह्यते, किं अश्वस्य वैशेषिकमिदं वचनं कर्त्तव्यं, तूपरगोमृगयोः समासेन, उत सर्वेषामेव समासवचनम्?। किं प्राप्तम्?, अश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तस्य वैशेषिकमिदं वचनं कर्त्तव्यम्। कस्मात्?।

वचनात्, एवं चतुस्त्रिंशद्वाजिनो देवबन्धोः इत्येतत् वचन-मर्थवदिति, इतरथा एतद्वचनमनर्थकं स्यात्। तस्माद्वैशे-षिकमश्वस्येति। (६।४।२ अ०)।

——

आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशदिति ब्रूयात् इत्यनेन समस्ताया एव ऋचो निषेधाधिकरणम्।

## तत् प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंश-द्वाच्यत्वात् ॥ १८ ॥ (सि०)

तत् प्रतिषिध्य प्रकृतिर्नियुज्यते, प्रकृतौ यत् कृतं वचनं तत् कर्त्तव्यमिति। कथम् ?। न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात् इति, सा नियुज्यमाना चतुस्त्रिंशद्वाच्यत्वात् वारयति शब्दं, तस्मात् प्रतिषिद्धत्वा-द्वैशेषिकं वचनं न कर्त्तव्यं सामासिकं वचनं कर्त्तव्यम्।

ननु षड्विंशतिरित्येव ब्रूयात् इति वचनात् प्रति-षिद्धेऽपि वैशेषिकमेव वचनं कर्त्तव्यमिति। न, इत्युच्यते, न ह्ययं षड्विंशतिशब्दो विधीयते, किन्तर्हि ? यथाप्राप्त-वचनमनूद्यते, कथमवगम्यते ?। एवकारकरणात्, यथा-प्राप्ते एवकारकरणं, न च षड्विंशतिशब्दः प्राप्तः, षड्-विंशतिसङ्ख्याभिधानं प्रकृतौ कृतमिहापि तदेव प्राप्तम्। षड्विंशतिशब्देन तत् प्रकृतौ लक्षितमिहापि षड्विंशति-शब्दस्तल्लक्षणार्थमेवोच्चारितः। षड्विंशतिसङ्ख्यापरोऽनेको-ऽर्थो विधीयते, चतुस्त्रिंशत्प्रतिषेधः, षड्विंशतिसङ्ख्यावच-

नन्वं, तत्र वाक्यं भिद्येत, भिद्यमाने एकवाक्यरूपं बाध्येत। किं तत्?। साकाङ्क्षत्वं, न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात् इति। एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत् कर्त्तव्यतया प्रतिषेधं प्रशंसितुमुच्चार्य्यते, तदेवमेकवाक्यतामापद्यते। सैकवाक्यता सङ्ख्यापरे बाधिता स्यात्। अनेकार्थविधानञ्चान्याय्यम्, एकार्थविधाने सम्भवति, भूयसी हि तत्राऽदृष्टकल्पना स्यात्। तस्माद्यथाप्राप्तवचनं कर्त्तव्यमिति।

**ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः॥ १९॥ (पू०)**

आम्नाता हि ऋक् प्रतिषिद्धा च तस्मादश्वस्य वैशेषिकं वचनं स्यात्। तथा च अविकल्पो भविष्यति, अविकल्पश्च न्याय्यः। विकल्पे विरुद्धं वचनं अन्योन्येन भवति। भवति इति चेत्, न प्रतिषेधः। नेति चेत्, न विधिः। तस्माद्वैशेषिकं वचनं कर्त्तव्यम्।

**तस्यान्तु वचनादैरवत् पदविकारः स्यात्॥ २०॥ (आ० नि०)**

अथ यदुक्तम्, ऋक् तत्र प्रतिषिध्यते इति। नैतदेवं, तस्यां वचनात् पदविकारः स्यात्, वचनं हि भवति, न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात् इति। तत्र चतुस्त्रिंशत्पदं श्रुत्वा प्रतिषिध्यते, ऋक् लक्षणया प्रति-

षिध्यति। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या। तस्माद्वै शेषिकं वचनं कर्त्तव्यमिति।

## सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात् ॥ २१ ॥ (उ०)

सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य। कस्मात्?। पदेन असंयोगात्, चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात्, विना तस्मात् पदात्, नैव ऋक्शेषो वङ्क्रिगणनं कुर्य्यात्।

अथ षड्विंशतिपदेन सम्बध्येत, तथापि नाष्टवङ्क्री सङ्ख्यां ब्रूयात्, तत्र दृष्टोऽर्थो नावकल्पेत. ऊनश्च वाक्यमर्थं न साधयेत्, ऊने च वाक्ये दोषश्रवणात्, मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् इति। चतुस्त्रिंशत्पदं चेह अनर्थकं स्यात्। तस्मात् समस्त-वचनं कर्त्तव्यम्। ऋचश्च विध्यन्तरेण विहितत्वाद्वैशेषिकं वचनमिति। ( ९। ४। ३ अ० )।

---

अग्नीषोमीयपशावुरूकशब्देन वपाभिधानाधिकरणम्।

## वनिष्टुसन्निधानादुरूकेण वपाभिधानम् ॥२२॥

ज्योतिष्टोमेऽग्नीषोमीये पशौ अध्रिगौ वचनं, वनिष्टु-

मस्य मा राविष्टोरूकं मन्यमाना: इति। तत्रोरूकशब्दं प्रति विचार:, किं वनिष्टुमस्य मा राविष्टोलूकसदृशं मन्यमाना:, उत उरूकं वपां मन्यमाना वनिष्टुं मा राविष्ट ? इति। किं प्राप्तम् ? वनिष्टुमुलूकं मन्यमाना इति। कथम् उरूकशब्द उलूकवचन: ? रलयो: समानवृत्तित्वात्, पर्य्यङ्क: पल्यङ्क:, रोमाणि, लोमानि, अङ्गुरि: अङ्गुलि:। उलूकसदृशत्वाच्च वनिष्टो:,वपायाश्चाप्रसिद्धे:।

एवं प्राप्ते ब्रूम:, उरूकशब्देन वपाभिधानं स्यात्। वपां मन्यमाना वनिष्टुं मा राविष्टेति एषा बुद्धि: क्रियमाणा दृष्टार्था भवति, भवति हि वनिष्टुसन्निधानात् व्यामोहेन वनिष्टोर्लवनप्रसङ्ग:, तच्च निवर्त्तयन्नेष शब्दो दृष्टप्रयोजनो भवति, न हि वनिष्टुर्न लवितव्य एव, वपोद्धरणकाले वपां मन्यमानेन लवितव्य: इतरस्मिन् पक्षे वनिष्टुं मा राविष्टेति लवितव्ये वनिष्टो अनर्थक: प्रतिषेध: उलूकसदृशवचनञ्च अदृष्टार्थम्। कथं पुनर्वपायामप्रयुक्तो वपां प्रत्याययिष्यति उरूकशब्द: ? इति। उच्यते, अवयवप्रसिद्ध्या उरुशब्दस्तावद्विस्तीर्ण वचनो दृष्ट:, तद्यथा उरु राजाङ्गणम् उरु तैलिकाङ्गणमिति। तथा, उरुं हि राजा वरुणश्चकार सूर्य्याय पन्था मन्वेत वा उ इति। तथा उरु विष्णो विक्रमस्व इति। इहापि स विस्तीर्ण वचन एव। तथा कशशब्दो मेदसि प्रसिद्ध:, यथा कशवाहिनो रथा:, मेदोवाहिन इति गम्यते। तस्यैकदेश: कशब्द: समुदायप्रत्ययमादधाति। मेदस्विनी तस्य वपा, न विस्तीर्णं मेदो मन्यमानेन तत्सन्निकृष्टो वनिष्टुर्लवितव्य

इति वपावचनता सिद्धा भवति । किं भवति प्रयोजनम् ? । वपानिष्टुवचनपक्षे उपमानस्य उरूकशब्दस्य अनूहः । वपावचनपक्षे उरुशब्द ऊहितव्यः कशब्दश्चेति उरूणी के, उरूणि कानि । अथ वा उरूके उरूकानिः यदि समासाभिप्रायः । (८।४।४ अ०) ।

---

अध्रिगौ प्रशसा बाहू इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् ॥

## प्रशसाऽस्याभिधानम् ॥ २३ ॥ (पू०)

तस्मिन्नेवाध्रिगावाम्नायते, प्रशसा बाहू इति । तत्र सन्देहः किं प्रशसा बाहू कृणुतात् प्रशसेति तृतीयान्तः, प्रशसा बाहू ग्रहीतव्याविति, उत, प्रशसेति द्विवचनं, आकारे विभक्तिः कृते प्रशस्तौ बाहू कर्त्तव्याविति ? । किं प्राप्तम् ? प्रशसाऽस्यभिधानम्, असौ हि शासशब्दः प्रसिद्धः, तथाहि तमनुवदति, दश प्रयाजानिष्ट्वाह शासमाहरेति, असिं वै शासमाचक्षते इति । अनर्थिका च बाह्वोः स्तुतिः स्तुतौ बाहू किमप्यदृष्टं कुरुत इति मान्त्रवर्णिकं तयोर्देवतात्वं कल्पितं स्यात्, तच्चायुक्तम् अन्यस्मिन् पक्षे सति । तथा शौनःशेफे भवति दर्शनम्, अतस्त्वामग्निं शासहस्तं शासेन विशसनत्वान्न द्रष्टुमुत्सहे इति । तस्मादसिना प्रशसेति गम्यते ।

## बाहुप्रशंसा वा ॥ २४ ॥ (सि०)

अथ वा बाहुप्रशंसैषा, प्रशसा बाहू कृणुतात् प्रशस्तौ बाहू च्छेत्तव्याविति। तथा प्रशसाशब्दस्य दृष्टार्थता भविष्यति इति, कात्स्न्येन हि बाह्वोः प्रशस्तता, कृत्स्नौ बाहू उद्धरतीत्यर्थः, कृत्स्नौ च बाहू उद्धर्त्तव्याविति। इतरस्मिन् पक्षे स्वधितिना विशसनं क्रियते असेश्च वाचकः शब्दः उच्चार्य्यते। यदि वा मान्त्रवर्णिकं द्रव्यं विधीयते असिना बाहू छेत्तव्यौ इति, तत्रायुक्तं विधिविहिते स्वधितौ सति। न च न प्रशस्तौ बाहू, ताभ्यां पशुर्हि गच्छति। अवनस्य च शमीकरीरे भक्षयति। तस्मात् बाहुप्रशंसा। किं भवति प्रयोजनम्?। अश्वमेधे शतं राजता हरितत्सरवोऽसयः, तत्रासिपर ऊहो भवति, यथा पूर्वः पक्षः। यथा तर्हि सिद्धान्तः, तथा बाहुपरिणाहेन भवितव्यम् (९।४।५ अ०)।

---

अध्रिगौ श्येनमस्य वक्ष इत्यादौ श्येनादिशब्दानां कात्स्न्यं वचनाधिकरणम्।

## श्येन-शला-कश्यप-कवष-स्रेकपर्णेष्वाकृतिवचनं प्रसिद्ध-सन्निधानात् ॥ २५ ॥

अस्मिन्नेवाध्रिगाविदमाम्नायते, श्येनमस्य वक्षः कृणुतात् शला दोषणी कश्यपेवांसौ कवषोरू स्रेकपर्णाष्ठीवन्त इति। एषु संशयः, किं आकृतिवचनमेषु भवति, उत कात्स्न्योद्धरणम्? इति। किं प्राप्तम्?, प्रसिद्धसन्नि-

धानात् आकृतिवचनम्, इह प्रसिद्धस्य सन्निधौ यदभिधी-
यते, किञ्चिदिदं कर्त्तव्यमिति तत्राकृतिवचनं गम्यते,
यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् इति अर्जुन-
वद्रा मेखलाः क्रियन्ताम् इति सिंहाकृतिवचनं मेखला-
कृतिवचनञ्च गम्यते, एवं श्येनाकृति वक्षः कर्त्तव्यं, शला-
कृती दोषणी, कश्यपाकृती अंसौ, कवषाकृती ऊरू,
करवीरपर्णाकृती अष्ठीवन्तौ इति ।

## कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २६ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति न चैतदस्ति, आकृतिवचन
इति, किन्तर्हि, कृत्स्नोद्धरणं विवक्षितं, कृत्स्नानि उद्धृ-
तानि एतानि एतदाकृतिकानि भवन्ति । यथा श्येनाद्या-
कृतिकानि भवन्ति, तथैतानि कुरुत, कृत्स्नानि उद्धरतेत्य-
यमर्थोऽवगम्यते, लक्षणयेदं चोद्यमानं दृष्टार्थं भवति ।
कृत्स्नोद्धृतैर्हि तैः प्रयोजनम् । तथा हि तदाकृतिकानाम-
वत्तं भवति । इतरथाऽतदाकृतिकानामवद्यात् । तस्मात्
कार्त्स्न्यमवगम्यत इति ।

## अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥ (यु०)

अध्रिगुश्चाङ्गानामुद्धरणार्थः, अङ्गानां कार्त्स्न्येनोद्धरणं
कथं स्यादित्येवमर्थः । कथम् ? । एवं हि भवति वचनं,
गात्रं गात्रमस्यानूनं कृणुतात् इति । तस्मादपि श्येना-
दिभिः कृत्स्नोद्धरणं गम्यत इति । प्रयोजनं पक्षोक्तम् ।
(९।४।६ अ०) ।

दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम्।

## प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥

अस्ति अग्निहोत्रम्, य एवं विद्वानग्निहोत्रं जुहोति इति। तत्रेदमाम्नायते, अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायात् इति। यदि तु दर्शार्थेन पौर्णमासार्थेन वा अग्निः उद्धृतोऽहुतेऽग्निहोत्रे उद्वाहात्, किं ज्योतिष्मती कर्त्तव्या, न? इति। किं प्राप्तम्? कर्त्तव्येति। कुतः?। उपसम्प्राप्तं हि निमित्तं, भवितव्यं नैमित्तिकेनेति। अग्निरसौ उद्धृतोऽहुतेऽग्निहोत्रे उद्वातः, एतावच्च निमित्तं ज्योतिष्मत्याः, तस्मात्सा कर्त्तव्येति। न चात्र शब्दोऽस्ति अग्निहोत्रार्थमुद्धृते उद्वाते कार्य्येति तस्मादपि कर्त्तव्या।

एवं प्राप्ते ब्रूमः, प्रासङ्गिके एवंलक्षणकेऽग्नावनुगते प्रायश्चित्तं न कर्त्तव्यं, परार्थं हि तदुद्धरणं कृतं दर्शपूर्णमासार्थम्, अग्निहोत्रार्थे चोद्धृते व्यापन्ने तदाम्नातम्। तस्मान्न कर्त्तव्यम्। आह, ननूक्तं नास्त्यत्र शब्दः, अग्निहोत्रार्थमुद्धृतेऽनुगते प्रायश्चित्तमिति। अत्रोच्यते, यद्यपि नास्त्येवञ्जातीयकः शब्दः, तथाप्यग्निहोत्रार्थमेवोद्धृतेऽनुगते प्रायश्चित्तं गम्यते। कथम्?। अग्निहोत्रप्रकरणे एतदाम्नातमिति, अग्निहोत्रप्रकरणे आम्नानात्तस्योपकारकमिति गम्यते। नाग्निहोत्रविशिष्टमुद्धरणं, स्वार्थं हि सर्वं क्रियते, न परविशेषणार्थेन। अत्रोच्यते,

अग्निसम्बद्धमेतत् प्रायश्चित्तमुच्यते, नोद्वानसम्बन्धम्। किमतो यद्येवम्?। यद्युद्वानसम्बद्धं भवेत्, उद्वानस्याङ्गत्वान्नैतदुद्वानार्थमिति गम्यते, प्रकृतेनाग्निहोत्रेण प्रयोजनेन सम्बध्यते। अग्निसम्बन्धे पुनर्गुणत्वादग्नेस्तेनैव प्रायश्चित्तस्य प्रयोजनसम्बन्धः, तत्रैवमुद्धृतो व्यापन्नो भवति, यदि स प्रयोजनं नाभिनिर्वर्त्तयति। तत्राग्निहोत्रार्थस्योद्धरणस्याग्निहोत्रनिर्वृत्तिः प्रयोजनम्। दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः। उद्धृतश्चानुगतं स्वस्मै प्रयोजनायायोग्यं प्रायश्चित्तेन योग्यं क्रियते। तच्च योग्यं कुर्वन् प्रायश्चित्तमग्निहोत्रस्योपकरोति। यस्तूद्धृतो दर्शपूर्णमासप्रयोजनः तं योग्यं कुर्वन्नग्निहोत्रस्योपकुर्य्यात्। यस्त्वग्निहोत्रार्थमुद्धृतः तं योग्यं कुर्वन् अग्निहोत्रायोपकरोति। तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तम्। कथं पुनर्ज्ञायते, अग्निना प्रायश्चित्तस्य सम्बन्धः नोद्वानेनेति?। अग्निविशिष्टेन उद्वानेन सम्बन्ध इति श्रुत्या गम्यते, उद्वानपरीतेनाग्निनेति वाक्येन। श्रुतेर्वाक्याद्बलीयस्त्वादुद्वानसम्बन्धः प्राप्नोति इति। उच्यते उद्वानसम्बन्धस्यापरिहार्य्यत्वात् यस्योद्वायात् इत्यविवक्षितमेव प्राप्नोति, अदृष्टार्थत्वान्न अनाकाङ्क्षितेन सम्बन्धः, तदुद्वानपरीतेऽग्नौ प्रायश्चित्तेन सम्बध्यमाने व्यापत्तौ सत्यामाकाङ्क्षितेन सम्बन्धः, दृष्टार्थता च। तस्मादुद्वानपरीतोऽग्निः प्रायश्चित्तेन सम्बध्यत इति। दर्शपूर्णमासार्थमुद्धृतो यत्रानुगच्छति तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः। परकीयश्चोद्धरणमिति तत्र प्रायश्चित्तं

न स्यात्। अपि च लिङ्गं भवति। किमिति ?। यस्याग्निरुद्धृतो अग्निहोत्र इत्यनुवादः। विधौ हि एतस्मिन् सति वाक्यभेदप्रसङ्गः। यद्यग्निहोत्रप्रयोजनमुद्धरणं, ततोऽकृतप्रयोजनमिति विवक्षायाम् अहुतेऽग्निहोत्रे इति वचनमनुवदितुमुपपद्यते। तस्मादपि अग्निहोत्रप्रयोजने उद्धृतेऽनुगते प्रायश्चित्तं भवितुमर्हतीति। किन्तर्हि तदा कर्त्तव्यम्। अविशेषविहितमग्नेरुपशमे प्रसज्यादिति। (६। ४। ७ अ०)।

---

धार्य्यहाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम्।

## धारणे च परार्थत्वात् ॥ २६ ॥ (सि०)

इदमाम्नायते, धार्य्यो गतश्रिय आहवनीयः इति अस्यानुगमे प्रायश्चित्तं अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायात् इति। तत्रैषोऽर्थः सांशयिकः, यदा धार्य्योऽग्निरनुगच्छति, तदा किमिदं प्रायश्चित्तं कर्त्तव्यं, न ? किं प्राप्तम् ? कर्त्तव्यमिति। उपसम्प्राप्तं, हि निमित्तं, एतावदिह निमित्तं, अग्निरग्निहोत्रार्थमुद्धृतः कृतप्रयोजन उद्वातीति। तच्चेह सर्वं प्राप्तं, तस्मात् कर्त्तव्यं प्रायश्चित्तमिति। ननु सर्वकर्म्मार्थमेतत् न केवलायाग्निहोत्राय। उच्यते, यदि सर्वकर्म्मार्थं, समुदायार्थं तत् न केवलस्यार्थेन भवतीत्युच्यते। यत्तु एकैकस्मै इत्येवं सर्वार्थं तत्, सर्वेभ्योऽपि प्रयुक्तमग्निहोत्राय

प्रयुक्तं भवति। न चेदं सर्वकर्म्मसमुदायार्थं, समुदायस्याचोदितत्वात् साधनानि प्रत्याकाङ्क्षाभावः। एकैकं तत्र कर्मोद्धरणमाकाङ्क्षति। तस्मात् सर्वार्थमपि सत् अग्निहोत्रार्थं भवति। एवञ्चेदनुगमनप्रायश्चित्तं प्राप्नोति इति। यथा पर्य्युक्षणं परिसमूहनं तृणापचय इत्येवमादयः पदार्थी धार्य्येऽग्नावहन्यहनि क्रियन्ते एवं प्रायश्चित्तमपि क्रियेत।

एवं प्राप्ते ब्रूमः, धारणे च गतश्रियोऽनुगमने इदं प्रायश्चित्तं न कर्त्तव्यम्। कुतः?। परार्थत्वात्, न हि तदा अग्निहोत्रार्थमुद्धरणं यस्मिन् काले भवत्यसौ गतश्रीः, तत्रान्यार्थमुद्धृतोऽग्निः सर्वार्थं धार्य्यते, उद्धरणं तु तत् एकस्मै एव प्रयोजनाय, धारणं तु सर्वकर्म्मार्थं, नच धारणेऽग्निहोत्रार्थेऽनुगमने प्रायश्चित्तं विहितं, किन्तर्हि उद्धरणे, परकीयं चात्रोद्धरणं, परार्थमुद्धरणं, यदर्थमुद्धरणं तदर्थमुद्धृतेऽपि तत् प्रायश्चित्तम्। तस्मान्न तत्रेदं प्रायश्चित्तमिति।

## क्रियार्थत्वादितरेषु कर्म स्यात् ॥३०॥ (आ० नि०)

अथ यदुक्तं, परिसमूहनं पर्य्युक्षणम् इत्येवमादयः पदार्था धार्य्येऽपि क्रियन्ते, एवं प्रायश्चित्तमपीति। अत्रोच्यते, युक्तं तत्, परिसमूहनादीनि क्रियन्ते, चोदितानि हि तानि, संस्कारार्थत्वेन प्रकृतानि च अकृतप्रयोजनानि च। उद्धरणं तु कृतप्रयोजनत्वात् निवृत्तं, नियतदेश-

कालत्वाच्चाशक्यम्। तस्मात् इदमतुल्यं प्रायश्चित्तेन। (६।४।८ अ०)।

---

दर्शार्थयोद्धरणस्यामन्त्रकत्वाधिकरणम्।

## न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

अस्त्यग्निहोत्रे उद्धरणमन्त्रः, वाचा त्वा होत्रा प्राणेन उद्गात्रा इत्येवमादिः। तत्रायमर्थः सांशयिकः, यद्दर्शपूर्णमासार्थेनोद्धरणं क्रियते, किं तत्रैष मन्त्रः कर्त्तव्यो न? इति।

किं प्राप्तम्? दर्शपूर्णमासार्थमप्युद्धृतेऽग्नौ अग्निहोत्रं हूयत एव। तत्र चेन्मन्त्रो न क्रियते, अमन्त्रोद्धृतेऽग्निहोत्रं प्रवर्त्तते। तस्मात् मन्त्रेण तदुद्धरणं कर्त्तव्यम्। अथोच्येत, कालाभावे विगुणत्वादुद्धरणं नाग्निहोत्रस्येति, तन्न, कालमात्रं हि अपगतम्, उद्धरणं तु विगुणमप्यग्निहोत्रस्य भविष्यतीति। एवं चेत् समन्त्रकं कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः, परार्थम् उत्पन्ने अग्नौ यस्य अग्निहोत्रं प्रवर्त्तते, चोदनेति कर्म ब्रूमः न तत्र मन्त्रः कर्त्तव्य इति। न तदग्निहोत्रस्योद्धरणं, अतः परकीये उद्धरणे न कर्त्तव्यमिति। उच्यते, ननूक्तं, विगुणमुद्धरणमग्निहोत्रस्यैव भविष्यति, न गुणाभावे प्रधानाभावोऽपि इति। अत्रोच्यते, न गुणः कालः, निमित्तमसौ भवति, इत्येतदुक्तम्। अतो निमित्ताभावे क्रियमाणमश्रुतं कृतं

भवति। तस्मान्न तदुद्धरणमग्निहोत्रस्येति। न चेदु-द्धरणमग्निहोत्रस्य, तस्मादत्र मन्त्रो न कर्त्तव्यः, कृतो-ऽपि ह्यसावनर्थक इति। (८।४।९ अ०)।

---

प्रायणीयचरौ प्रदानधर्म्माणामननुष्ठानाधिकरणम्।

## प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संस-र्गाच्च मधूदकवत्॥ ३२॥ (पू०)

ज्योतिष्टोमे समाम्नायते, आदित्यः प्रायणीयः पयसि चरुः इति। तत्र सन्देहः, किं प्रदानार्थाः पयोधर्माः पयसि कर्त्तव्याः, उत न? इति। यदि प्रदानार्थमेतत् पयः, ततः कर्त्तव्याः, अथ श्रपणार्थं, न कर्त्तव्याः। कथं संशयः?। सप्तमीनिर्द्देशात् श्रपणार्थं पय इति गम्यते, देवतासम्बन्धस्य तु चरोरधिकरणे पयसि, श्रूयमाणे वाक्य-भेदाशङ्का, अतः संशयः।

किं तावत् प्राप्तम्? प्रदानार्थमिति। कथम्?। आदित्यः चरुर्भवति, स च पयसीत्येवमनेकार्थविधाने वाक्यं भिद्येत, द्वावपि चेहार्थौ अतो वाक्यादवगम्येते, यद्यन्य-तरदेवतयोर्विधीयते, तदाऽन्यतरदविधीयमानं गम्यते, अतो न वाक्यभेदः। यथा च न वाक्यभेदस्तथा आश्रयि-तव्यम्। तत्राधिकरणसम्बन्धे विधीयमाने देवतासम्बन्धा-वगतिर्नावकल्पते, प्रमाणान्तरेणाप्राप्तत्वात्। देवतासम्बन्धे

तु विधीयमाने द्वे ये निर्दिश्येते चरुपयसी, तयोर्निर्देश-सामर्थ्याद्वाक्येन संसृष्टं गम्यते, तच्च देवतया सम्बध्यते, तत्रार्थात्पय आधारस्वरुर्भवति ।

आह, वाक्येन द्वे चरुपयसी गम्येते, न तयोः संसर्गः। उच्यते, यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्यमितयोर्गम्यते, तत्रार्थात् संसर्गः, एकत्वाच्च वाक्यस्य समुच्चयः। तेनात्र निर्देश एव विवक्षितः, नाधिकरणसम्बन्धो गम्यमानोऽपि विधीयते । एवं तु निर्देशः क्रियते, संसृष्टे चरुपयसी कथं गम्येयातामिति, तत्र चरुसंसृष्टं पयः चरौ त्यज्यमाने नियतं त्यज्यते, तदस्य प्रदानदर्शनं भवति। पयसा श्रयमाणस्य तस्य प्रदानं कथम् स्यादिति सप्तमी निर्दिश्यते। तस्मात् भोजनार्थं यागार्थमेतत् पयः। भोजनमिति सारूप्याद् यागमाह। तस्माच्च पयः प्रदानार्थं पयोधर्मैः सम्बध्यते ।

आह, न त्यागमात्रं यागः, देवतामुद्दिश्य यस्त्यागः स यागो भवति। उच्यते, अयमप्यदितिं देवतामुद्दिश्य त्यागः क्रियते इति। आह, न पयसोऽदितिर्देवता, न ह्युद्देशमात्रेण देवता भवति, या यस्य श्रूयते सा तस्य देवता इति। चरोश्चैषा श्रूयते न पयसः। उच्यते, उभयस्य निर्देशात्, उभयेन देवता सम्बध्यते, संसृष्टेन मधूदकवत्, यथा दधि मधु घृतं धाना उदकं, तत् संसृष्टं प्राजापत्यमिति भवति, एवमेवेदं द्रष्टव्यम्। यद्यपि सप्तमीनिर्दिष्टं, सप्तम्यर्थस्याविविक्षितत्वान्निर्देशमात्रस्य विवक्षितत्वात्, यथौदने दधि दत्वा अभ्यवहर्त्तव्यमिति ओदनस्य निर्देशमात्रं

विवक्ष्यते, नाधिकरणत्वम्, एवमिहापि द्रष्टव्यम्। तस्मात् प्रदानार्थं पयः प्रदानार्थाश्च पयोधर्माः कर्त्तव्या इति।

## संस्कारप्रतिषेधश्च तद्वत्॥ ३३॥ (यु० १)

एवञ्च कृत्वा प्रदेयसंस्काराणां केषाञ्चित् प्रतिषेध उपपन्नो भवति, अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयति इति। प्राप्ते हि प्रतिषेधो न्याय्य इति।

## तत्प्रतिषेधे च तथाभूतस्य वर्जनात्॥ ३४॥ (यु०२)

तत्प्रतिषेधे पयःप्रतिषेधे तथाभूतमपि लोके वर्ज्यते, पयसा सिक्तं, पयः स्पृतञ्च। नचैष श्रयणार्थस्य द्रव्यस्य धर्मः, यथा श्रयणार्थं पानीयं, तत्प्रतिषेधे तैले पीते पानीयं न पातव्यमिति विलेप्यं यवागूश्च पीयते। नच तथाभूतस्य वर्जनात् पयो लोके एवं भवति, भोजनार्थं हि तत्। यथा हि लोके पयः, तद्वदिहापि भवितुमर्हति इति सामान्यतो दृष्टं व्यपदिष्टम्।

## अधर्मत्वमप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः॥३५॥ (सि०)

अधर्मत्वं तु पयसः, नास्य प्रदेयपयोधर्मा भवेयुरित्यर्थः। कुतः?। अप्रदानात्, नहीदं प्रदीयते। ननु चरौ प्रदीयमाने प्रदायिष्यत इत्येवमर्थं पयसि श्रयणमुच्यते। नेत्याह,

मृतश्चरुः कथं स्यादित्येवमर्थं हि तत् ज्ञायते। मृतैस्त-ण्डुलैः प्रयोजनमस्ति, नह्यन्यथा चरुर्भवति इति, ननु प्रत्तेन पयसा नैतद्दातव्यं श्रूयते। कथम्?। प्रणीतार्थ-विधानात्। ननु वाक्यभेद एवं भवति इति परिहापित एष पक्षः, संसृष्टमत्र हविर्भवति इत्युक्तम्। उच्यते, अतुल्य-त्वादसंसर्गः, अतुल्ये चरुपयसी, प्रत्यक्षतोऽधिकरणत्वेन पयः श्रूयते, प्रदेयत्वेन चरुः, पयसो यद्वाक्येन प्रदेयत्वं गम्यते, तदधिकरणश्रुत्या बाध्यते। यत्तु वाक्यभेदप्रसङ्ग इति, तन्न, न हि पयसि चरुरिति सम्बन्धो भविष्यति, कथन्तर्हि, पयसि आदित्य इति, उभावादित्यशब्देन सम्भंत्स्येते, आदित्यः पयसि, आदित्यश्चरुरिति उभौ चरु-पयःशब्दौ आदित्यप्रधानावित्येकं वाक्यं भविष्यति, न वाक्यभेदप्रसङ्गः, पयआधार आदित्यो भविष्यति। तस्मान्न पयसि प्रदेयधर्मा भवितुमर्हन्ति।

## परो नित्यानुवादः स्यात् ॥३६॥ (आ० नि०१)

अथ यल्लिङ्गमुक्तं, अयजुषा वत्सानपाकरोति अपवित्र-वति गान्दोहयति इति। नैतत्, एवं सति अस्यार्थस्य साधकं भवति, किन्तर्हि एतन्नित्यानुवादकम्। नित्य-मेतमर्थं सन्तं अनुवदति। नैवाप्रदेयत्वात् यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते। ननु नित्यानु-वादोऽनर्थकः। उच्यते, न वयं प्रयोजनवत्ताम् अप्रयोजन-वत्तां वा विचारयामः, किम् एतस्माद्वाक्याद्गम्यते? इति परीक्षामहे, अस्माच्च वाक्यादिदं गम्यते, न यजुषा वत्सा

अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते इति, तच्चास्य अप्रदेयत्वात् अप्राप्तं यजुः पवित्रं वेति ।

## विहितप्रतिषेधो वा ॥३७॥ ( आ० नि० २ )

अथवा, विहितस्यैव प्रतिषेधो द्रष्टव्यः, विहितं केषाञ्चित् यजुषा वत्सानपाकरोति, पवित्रवति गां दोग्धि इति, तस्य प्रतिषेधोऽर्थवानेव भवति इति ।

## वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात् स्यात् कारणात् केवलाशनम् ॥३८॥ (अ० नि०)

अथ यदुक्तं, पयःप्रतिषेधे पयसा सिक्तं पयसा संसृष्टं च वर्ज्यते इति, तत्र ब्रूमः, युक्तं हि लोके यत्संसृष्टस्य वर्जनं, तदेव हि तत्र प्रतिषिध्यते, नित्यं ह्युपसर्जनीभूतं भोजने पयः प्रचरति, यच्च प्रचरति, तत्प्रतिषेधोऽर्थवान्, यत् न प्रचरति, तस्य ह्यप्रसङ्गात् प्रतिषेधोऽनर्थकः । ननु केवलमपि लोके पय उपभुज्यते । उच्यते, कारणात् केवलाशनं, व्रतमौषधं वा यस्य, स केवलं उपयुङ्क्ते, नत्वेतत् प्रचुरम् । तस्मात् प्रायेण गुणभूतत्वात् पयसः, पयोयुक्तमेव न भक्षयितव्यमित्येवमर्थः पयःप्रतिषेध उच्यते ।

## व्रतधर्माच्च लेपवत् ॥ ३९ ॥ (आ०)

अथ कस्मान्नायमन्यः परिहार उच्यते ?, व्रतवदेतत् द्रष्टव्यमिति, यथा ब्रह्मचारिणा मांसं न भक्षयितव्यमित्युक्ते दर्विगतमपि लेपं वर्जयन्ति, एवमिहापि पयो न

पातव्यमित्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्ति इति।

## रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

(आ० नि०)

न वा एष परिहारः। परिहारान्तरनिवृत्यर्थो वाशब्दः। कुतः?। पुरुषधर्मत्वात् व्रतस्य, अदृष्टार्थं ब्रह्मचारिणो मांसाभक्षणं, तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं विदितं भवति, तस्यापि दोषः, न श्लेष्मप्रकोपादि किञ्चित् दृष्टमपेक्षते, ननु पयःप्रतिषेधे तथा, तस्मात् पूर्व एव परिहार इति। (६।४।१० अ०)।

———

अभ्युदयेऽष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्।

## अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ॥ ४१ ॥

इदं समाम्नायते, वि वा एनं प्रजया पशुभिर्र्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् इति। शृते चरुन्दध्नंश्चरुम् इत्येतदुदाहरणम्।

तत्रैषोऽर्थः सांशयिकः, किं शृते दधनि च इज्यार्थाः पयोधर्माः कर्त्तव्या, उत न? इति। किं प्राप्तम्?। न कर्त्तव्या इति। कुतः?। अप्रदानार्थत्वात्, प्रणीतार्थे विधानात् अतुल्यत्वाच्च चरुणा न संसर्ग इति।

एवं प्राप्ते ब्रूमः, अभ्युदये निमित्ते योऽयं दोहो देवताया अपनीतः, स स्वधर्मा स्यात्, इज्यार्थाश्च तत्र पयोदधिधर्माः कर्त्तव्याः। कुतः?। इज्यार्थमेव हि तत् पयो दधि च प्रवृत्तं, यतश्चेज्यार्थम्, अतोऽस्येज्यार्थाः प्रवृत्ता एव धर्माः, तद्धर्माणां प्रवृत्तावस्ति कारणं, निवृत्तौ नास्ति।

ननु प्रणीतार्थे दधिपयसी विधीयेते। नेत्याह, वाक्यं हि तदा भिद्येत, चरो देवतार्थे, चर्वर्थयोश्च दधिपयसोः। आह, ननु चरोरपि देवतासम्बन्धो दधिपयसोरपि तथा, न भविष्यति वाक्यभेद इति। नैवं शक्यं, विभागः कर्त्तव्य इति, पूर्ववाक्यं वृत्तं, त्रेधा तण्डुलान् विभजेत् इति। तदनन्तरं विभागविशेषपरमिदं भवति वाक्यं, ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् इति। अत्राविशेषाद्दधिपयसोरपि विभागो वक्तव्यः। यदि च दधिपयसी विभक्तव्ये सती प्रणीतार्थेऽप्युच्येयातां, ततो भिद्येत वाक्यम्, अतो नैतयोः प्रणीतार्थे विधानम्। अविधीयमाने च सप्तम्यर्थे प्रातिपदिकार्थो देवतया सम्भंत्स्येते, वाक्यसामर्थ्यात्। उभे च दधिपयसी देवतया सम्भंत्स्येते चरुणा सह, दधनि चरुरेको भाग इन्द्राय प्रदात्रे भवति इति। यथा

विभज्यमानेषु नानाद्रव्येषु उच्येत, रुक्मपात्र्यां समाहार्या मणयः, एको भागो देवदत्तस्य। रजतपात्र्यां सुवर्णं निहितम् अपरो भागो विष्णुमित्रस्येति सह पात्रीभ्यां द्वौ भागौ गम्येते, विभागविशेषपरत्वाद् वाक्यस्य, प्राप्तेषु विभक्तत्वादनुवादश्च सप्तम्यर्थो गम्यते। एवमिहापि विभाग परत्वादेव वाक्यस्यास्य, विभक्तत्वाच्च दधिपयसोरेको भाग इति गम्यते। अर्थप्राप्तत्वाच्च सप्तम्यर्थोऽनुवादो भविष्यति। तस्मात् प्रदानार्थे दधिपयसी। प्रदानार्थाश्च दधिपयसोर्धर्माः कर्त्तव्याः।

## शृतोपदेशाच्च ॥ ४२ ॥ (यु०)

इतश्च प्रदानार्थे दध्नि पयसि च इज्यार्था धर्माः कर्त्तव्या इति। कुतः?। सिद्धवत् शृतोपदेशो भवति, शृते चरुं दधंश्चरुम् इति। स खलु धर्मेषु उपपद्यते, इतरथा श्रयणं न क्रियेत इति। तत्र सिद्धवच्छृतोपदेशो नावकल्पेत। तस्मादपि पश्याम इज्यार्थाः दधिपयसोर्धर्मा कर्त्तव्या इति। (८।४।११अ०)।

---

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम्।

## अपनयो वार्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ (सि०)

अस्ति पशुकामेष्टिः, यः पशुकामः स्यात् सोऽमावास्यां

निष्ठा वत्सानपाकुर्य्यात्। ये चोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद् ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् इति। शृते चरुं, दधंश्चरुमित्येतदुदाहरणम्। अत्र सन्देहः, किं शृते दधनि चेज्यार्थां दधिपयोधर्माः कर्त्तव्या उत न? इति। किं प्राप्तम्? पूर्वेणाधिकरणेन कर्त्तव्या इति, समाना हि श्रुतिर्भवति इति। सिद्धवच्च शृतोपदेशः सत्सु प्रदानार्थेषु धर्मेषु उपपद्यते।

एवं प्राप्ते ब्रूमः, अपनयो वा धर्म्माणां भवेत्। अर्थान्तरे ह्येतत्पयो विधीयते, दधि च श्रयणार्थं, न प्रदानार्थं। सप्तमीसंयोगात् चरुपयोवत्। यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते सप्तमीसंयोगात्, एवमिहापि।

## लक्षणार्था शृतश्रुतिः॥ ४४॥ (आ० नि०)

अथ यदुक्तं सिद्धवच्छृतोपदेशो भवति इति। नैष दोषः। श्रयणेन द्रव्यं लक्षयिष्यति, अर्थप्राप्तं हि चरौ श्रयणं, तत्सम्बद्धं लक्ष्यते, श्रयणवति द्रव्ये चरुरिति। तस्मात् प्रदेयधर्म्मा न भवेयुरिति। (९।४।१२ अ०)॥

---

ज्योतिष्टोमे श्रयणानां प्रदेयधर्म्मानुष्ठानाधिकरणम्।

## श्रयणानान्त्वपूर्वत्वात् प्रदानार्थं विधानं स्यात् ॥ ४५ ॥ (पू०)

ज्योतिष्टोमे श्रूयते, पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रं आज्येन पात्नीवतम्। तत्र संशयः। किं श्रयणानां प्रदेयधर्मा भवन्ति, उत न? इति। कुतः संशयः?। यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्ति इति। किं प्राप्तम्? प्रदेयानि प्रदेयधर्मैः सम्बध्येरन् इति। श्रयणाद्धि इयं जायते, पयोमिश्रश्च सोमो भवति, संमिश्रे च हूयमाने पयोऽपि होमेन सम्बध्यते। यदि पयोमिश्रश्च सोमो भवति, तत्र सोमस्य पयसा मिश्रमानस्य न कञ्चिदुपकारं पश्यामः, यागे तु उपकारो भवति निर्वृत्तिर्नाम। यदि होमेन सम्भंत्स्यत इति मिश्रणाभिप्रायः, ततः उपकारकं मिश्रणं दृष्टेनोपकारेण, श्रुतो हि गुणवान् यागः प्रत्यक्षः पयसा निर्वर्त्स्यत इति। सोमोपकारः कल्प्यः स्यात्। तस्मात् पयसा सोमो मिश्र्यते, स मिश्रितः प्रयोगवचनेन कथं सम्बध्यत इति। न च प्राकृतं मिश्रणं केनचिद्द्रव्येण प्राप्तं, यत्रेदं द्रव्यान्तरं पयो विधीयते इति, अपूर्वत्वात् सोमस्य। तस्मात् प्रदानार्थस्य पयसो विधानं स्यात्। प्रदेयपयोधर्माश्चात्र कर्त्तव्या इति।

## गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ (सि०)

वा शब्दः पक्षं व्यावर्त्तयति। गुणभूतं पयः स्यात् सोमस्य, न प्रदेयद्रव्यं, प्रदेयत्वेनाश्रवणात्, सोमार्थेन च श्रुतत्वात्।

## अनिर्देशाच्च ॥ ४७ ॥ (यु० १)

न ह्येभि प्रयोगवचनेन वा अस्य सम्बन्धः। अनिर्देशः परार्थत्वात्। न च, प्रत्यक्षेणापि पयस्त्यागे यागनिर्वृत्तिः पयसा, प्रत्यक्षदेवतासम्बद्धो हि त्यागो यागः। न चाव पयसो देवतासम्बन्धः, मैत्रावरुणं ग्रहं गृह्णाति इति वचनं, न मैत्रावरुणं पय इति। तस्मात् दृष्टोपकाराभावात् अदृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते, तस्मान्न प्रदेयधर्म्मैः सम्बध्यत इति।

## श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ (यु० २)

इतश्च सोमार्थं पयः। कुतः ?। श्रुतिर्हि सोमप्रधाना भवति, द्वितीयाविभक्तिः श्रूयते। तस्मात् श्रयणेन सोम एवेप्सित इति।

## अर्थवादश्च तदर्थवत् ॥ ४९ ॥ (यु० ३)

अर्थवादश्च श्रयणस्य सोमार्थस्य भवति, स मित्रोऽब्रवीत् पयसैव मे सोमं श्रीणन् इति, न हि भवति पयो मे दद्युः इति। कथं तर्हि ? सोमं पयसा संस्कुर्य्युः इति। तस्मादपि सोमार्थं श्रयणम्।

**संस्कारं प्रति भावाच्च तस्मादथ प्रधानं स्यात् ॥ ५० ॥ (यु० ४)**

संस्कारं प्रति श्रयणवचनं भवति, यत्र संस्काराः श्रूयन्ते तत्रेदं श्रूयते, पयसा मैत्रावरुणं श्रीणाति इत्येवमादि। तस्मात् संस्कारप्राये श्रवणादयमपि संस्कार एवेति गम्यते। भवति हि प्रायोवृत्त्या तद्बुद्धिः, यथाऽग्रप्राये लिखितोऽग्र इति गम्यते। तस्मात् प्रदेयधर्मैर्न सम्बध्यत इति। (८।४।१२ अ०)।

---

अश्वमेधे इशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम् ॥

**पर्य्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ (पू०)**

अश्वमेधे समामनन्ति, ईशानाय परस्वत आलभेत इति। तत्प्रकृत्य श्रूयते, पर्य्यग्निकृतान् आरण्यानुत्सृजन्ति इति संशयः, किमारण्यानामालम्भ उत्सर्गार्थ एव, द्रव्योत्सर्गश्च अथ किं कर्मशेषप्रतिषेधः, पर्य्यग्निकरणान्तैः संस्कृता उत्स्रष्टव्याः ? इति। किं प्राप्तम् ? द्रव्योत्सर्गोऽयम्, आलम्भश्च उत्सर्गार्थ एवेति। कुतः ?। एवमुत्सर्गम् अप्राप्तं विदधत् तस्य सत्तां ब्रुवन् श्रुत्या वक्ष्यति, इतरथा उत्सर्गं प्राप्तमनुवदेत्। वाक्यार्थस्य प्रतिषेधस्य सत्तां ब्रूयात् प्रत्ययः। श्रुतिश्च वाक्याद् बलीयसी। एवञ्च सति देवतासम्बन्धो

ग्रहणे, ईशानमुद्दिश्य परस्वन्त आलब्धव्याः, पर्य्यग्निकरणं कृत्वा त्यक्तव्या इति । उपधानवत्, यथा, एतत् खलु साक्षादन्नं य एष चरुर्य एनं चरुमुपदधाति इत्युपधानार्थमेव चरोरुपादानम्, एवमिहापि उत्सर्गार्थं एवालम्भो भविष्यति ।

## शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥ (सि०)

कर्मशेषप्रतिषेधो वाऽस्मिन् वाक्य उच्यते । कुतः ? । अर्थाभावात्, ईशानाय परस्वत आलभेत इत्यस्य वाक्यस्य न कश्चिदर्थो भवेत्, यद्युत्सर्गार्थं आलम्भः स्यात् । कथम् ? । आलम्भकाल एवाध्वर्य्युर्जानीयात् नेमे ईशानाय दास्यन्त इति, तस्यैवं जानतो नैवं सङ्कल्पो भवति, ईशानाय दातुं ग्रहीतव्या इति । अशक्यार्थत्वादनर्थकमिदं वाक्यं भवति । स एष सङ्कल्प एवमवकल्पते यदीशानाय दातव्याः । तस्मादालम्भवचनेन शब्देन दानमेव विधीयते इति गम्यते । यदा च दानं विधीयते, तदा पर्य्यग्निकृतानुत्सृजन्तीत्युत्सर्गमनूद्य, एवमुत्सृजन्तीति विशेषविधानार्थं भवति शास्त्रम् ।

कथं पुनरत्र विशेषो विधीयते, किं कालः पर्य्यग्निकरणे, एतस्मिन् काल उत्सृजन्तीति । नेत्याह, नात्र कालवचनः शब्दः श्रूयते । काले च विधीयमाने कालान्तरं प्रतिषिध्यते न अङ्गान्तराणि । अथ किं पर्य्यग्निकरणवदुत्स्रष्टव्यमिति ? । तदपि नास्ति, न ह्यत्र पर्य्यग्निकरणभावना कीर्त्यते । तस्मात्त्र सत्यां पर्य्यग्निकरणात्

प्राञ्चः पराञ्चश्चार्थाः सर्वे प्रतिषिध्येरन् । कथं तर्हि ? निवृत्ते पर्य्यग्निकरणे उत्स्रष्टव्यः इति । किमेतस्यामवस्थायामिति ? । नेत्याह, चोदकादेवैतत् प्राप्तम्, एतदवस्थः पशुरुत्सर्जनीय इति । अवस्थान्तरप्रतिषेधस्य च नायं शब्दो वाचकः । चोदकप्राप्ते हि काले उत्सृज्यमाने कृतपर्य्यग्निकरण एवासौ भवति । यदि तु अवस्थायाः प्रतिषेधः स्यात्, पर्य्यग्निकरणादूर्द्ध्वं उत्सर्गात् प्राक् पदार्थाः प्रतिषिध्येरन्, न पराञ्चः । कस्तर्ह्यर्थः ? । पर्य्यग्निकरणे कृते यादृशो भवति तादृशस्त्याज्य इति । ननु चोदकेनैव तदङ्गोऽसौ प्राप्तः । उच्यते, पुनरस्यैतदङ्गवत्ता श्रूयते, अङ्गान्तरपरिसङ्ख्यार्थम्, एतैरेव अङ्गैरङ्गवानुत्स्रष्टव्यः । एवं चोदकप्राप्तानि परिसङ्ख्यायन्ते, नान्यानि अङ्गानि भवन्तीति। कथमेष शब्द एवं परिसङ्ख्यातुं शक्नोति इति चेत् । शक्नोतीति ब्रूमः, कथम् ? प्रत्यक्षेण वाक्येन तैरङ्गैर्निराकाङ्क्षीकृते प्रधाने शेषैरङ्गैः सह चोदकेन परोक्षा सती एकवाक्यता न भविष्यति इति । तस्मात् कर्मशेषप्रतिषेध इति।

## पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥ (यु० १)

पूर्ववांश्च भवति शब्दो यागप्रवृत्तिपूर्वकः, आज्येन शेषं संस्थापयति इति । यदि याग एष प्रारब्धस्ततः संस्थापयतीति समाप्तिसादृश्यादुपपद्यते । यागस्य हि इदं यागान्तरं समाप्त्या सदृशम् । यदि हि पूर्वो न यागः प्रवृत्तः स्यात् उत्सर्गमात्रं, न तस्य यागः समाप्त्या सदृश-

स्तत्र संस्थापयतीति नोपपद्यते। तस्मादपि शेषकर्म्म-प्रतिषेधः।

## प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारितत्वाद् यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥ (यु० २)

इदं प्रयोजनसूत्रम्। यदि द्रव्योत्सर्गौ विधीयते ततः संस्काराणामकर्म स्यात्। कुतः?। संस्कार प्रवृत्तः यज्ञहेतुत्वात्। तत् प्रतिषेधे यज्ञाभावे किमिति संस्काराः क्रियेरन्, यज्ञकारिता हि ते। यथा प्रयाजाभावे तदर्थ-माज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते, अप्रयाजास्ता अननूयाजा इति यत्र श्रूयते तत्र प्रयाजाभावे तदर्थमाज्यं न गृह्यते, एवमिहापि संस्कारा न कर्त्तव्या इति।

## क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥ (आ० नि०)

यदा तु कर्म्मशेषप्रतिषेधपक्षस्तदापि किं न कर्त्तव्याः संस्काराः? इति। नैतदेवं, क्रिया स्यादवच्छेदपक्षे, यागो हि तदा भवति। तस्मात् सर्वे यागपदार्थाः कर्त्तव्याः। यदि न यागो भवेत् ततः अकर्म, संस्काराणां सर्वहानं स्यात्, यागस्तु तदा भवति। तस्मात् कर्मशेषप्रतिषेधपक्षे सर्वं कर्त्तव्यम् इति। (९।४।१४ अ०)।

---

आज्येन शेषं संस्थापयतीत्यनेन कर्म्मान्तरविधानाधिकरणम्।

## आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ ५६ ॥ (पू०)

पय्यग्निकृतं पात्नीवतमुत्सृजति इति प्रकृत्य श्रूयते, आज्येन शेषं संस्थापयति इति। तत्र सन्देहः, किमाज्यं पूर्वस्मिन् प्रतिनिधीभूतम्, अथ वा आज्यद्रव्यकं पूर्वस्मात् कर्म्मान्तरं विधीयते? इति। किं प्राप्तम्? प्रतिनिधिरिति। कुतः?। पात्नीवतमिति द्रव्यम् उच्यते, उत्सृजतीति तत्रैवोत्सर्गः श्रूयते। शेषमित्युपयुक्तेतरत् विद्यमानं गम्यते, तत् आज्येन संस्थापयति इति पशोः कार्य्ये आज्यं श्रुतं भवति इति। ननु पूर्वकर्म्म परिसमाप्तमित्युक्तम्। अत्रोच्यते, द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वाऽपरिहृते पुनरसमाप्तं पूर्वकर्मेत्याशङ्क्यते, तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे। संस्थापयति इति च अपूर्वे नोपपद्यते।

इतश्चाशङ्कामहे,

## समाप्तिवचनात् ॥५७॥ (२ यु०)

समाप्तिवचनमिदं भवति, संस्थापयति इति, तेन मन्यामहे, यत् पूर्वं पशुना आरब्धं तदुत्सृष्टे पशावाज्येन परिसमाप्यते इति। अपूर्वस्यात्र कर्मण उच्यमानस्यारम्भ एव वक्तव्यो भवति, यतस्त्वनभिधायारम्भं परिसमाप्ति-

ऽहीन इति। तद्विवेकज्ञानार्थमिदमुच्यते, आसनोपायि-चोदनया यजमानबहुत्वेन च सत्रत्वमवगम्यते। एते चोदने आसते, उपयन्ति इति हि नित्यं सत्रसम्बद्धे दृष्टे, य एवं-विद्वांसः सत्रमासते, य एवं-विद्वांसः सत्रमुपयन्ति इति। यजमानबहुत्वेन च, चतुर्विंशतिपरमाः सप्तदशा-वराः सत्रमासीरन् इति। तत्सहचरितलिङ्गदर्शनात् सहचरिते प्रत्ययो भवतीति।

## यजतिचोदनादहीनत्वं स्वामिनां चाऽस्थितपरि-माणत्वात्॥ ६०॥ (सि०)

अथ किंलक्षणकोऽहीनः? इति, तदुच्यते, यत्र यजति-चोदना, अनियतञ्च कर्तृपरिमाणं तत्र अहीनः इति निश्चीयते। अहीनानां यजतिचोदनया विधानं, द्विरा-त्रेण यजेत इत्येवमादि। कर्तृपरिमाणञ्च एषामनियतं, सत्राणान्तु नियतं परिमाणं बहवः। एवंलक्षणस्य च लक्षणे लक्षितं प्रयोजनं नान्यन्मृग्यमिति॥(१०।६।१६ अ०)॥

---

पौण्डरीके सकृदेव दक्षिणादानाधिकरणम्।

## अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्म भेदः स्यात्॥ ६१॥ (पू०)

अस्ति पौण्डरीक एकादशरात्रः, पौण्डरीकेण एका-दशरात्रेण स्वाराज्यकामो यजेत इति। तत्र श्रूयते, अयुतं पौण्डरीके दद्यात् अश्वसहस्रमेकादशम् इति। तत्र

सन्दिह्यते, किं प्रत्यहं अयुतम् अश्वसहस्रञ्च दातव्यम्, उत, एकमेवायुतमश्वसहस्रञ्च सकृत्? इति किं प्राप्तम्? अहीने दक्षिणाशास्त्रं प्रत्यहं भिद्येत। कुतः?। गुणत्वात् दक्षिणायाः, प्रधानत्वाच्च अह्नां, समुदायशब्देन समुदायीनि अहानि उपलक्ष्य दक्षिणा गुणो विधीयमानः प्रतिप्रधानं भिद्येत, यथा गणाय स्नानम्, उपलेपनं वा विधीयमानं गणिनां भवति, एमत्रापि द्रष्टव्यम्। प्रतिकर्मावसायी च चोदक एवमनुग्रहीष्यते, दक्षिणाभूयस्त्वाच्च फलभूयस्त्वं भविष्यति। अतोऽवगम्यते भेद इति।

## सर्वस्य वैककर्म्यात् ॥ ६२ ॥ (१ आ०)

न चैतदस्ति, प्रत्यहं दक्षिणाभेद इति, एकमेवायुतं सहस्रं च दीयते। कुतः?। ऐककर्म्यात्, एकं हि दक्षिणानां कार्य्यम्, ऋत्विगानमनम्। आनतिश्च साङ्गक्रतुनिर्वृत्तये कृतेति अन्तरा न तया प्रयोजनमस्तीति न भूयः क्रियते। यत्तु, अङ्गभूयस्त्वेन फलभूयस्त्वमिति तत् अङ्गत्वे प्रज्ञाते भवति, नान्यथा। 'समुदायाङ्गञ्च दक्षिणा, न अवयवाङ्गमित्युक्तम्। अथ यदुक्तं, प्रतिकर्मावसायी चोदकः प्रतिकर्म प्रापयति, इति। प्रत्यक्षवचनात् समुदायाङ्गीकरणेन च दक्षिणानां विधानमिति चोदको बाधित इति न दोषः।

## पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥

(१ आ० नि०)

न चैतत्, सकृदेव दातव्यमिति, किं तर्हि, भेदेन।

कुतः?। प्रत्यहं दक्षिणानां प्राप्तानामयं विशेष उच्यमानः प्रत्यहमेव भवितुमर्हतीति। पृषदाज्यवत्, यथा पृषदाज्येनानुयाजान् यजति इति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते, एवमत्रापि द्रष्टव्यमिति।

**ज्यौतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात् प्रकृतिवत् तस्मान्नासां विकारः स्यात्॥ ६४॥ (२ आ०)**

न चैतदस्ति, भेद इति, किन्तर्हि, तन्त्रेण सकृदेव। कथम्?। ज्यौतिष्टोम्यो हि दक्षिणाः साङ्गं कर्मराशिमङ्गीकृत्य दीयन्ते, तथाभूतानाञ्च तासां समुदायानत्यर्थानां प्राप्तानामयं विशेष उच्यते, सहस्रमयुतम् इति, विशेष उच्यमानः, या इह दक्षिणा दीयन्ते, तासामयं विकार इति गमयति, एकत्वम् आनतेः, न वारयति। तस्मात्सकृत् दातव्यमिति। यत्तु, अनुयाजवत् इति, युक्तं, यत् अनुयाजेषु द्रव्यस्य भेद इति, यागे हि द्रव्यं गुणभूतं चोद्यते, तत् यागानां भेदादन्यस्य क्रियमाणं न अन्यस्य उपकरोतीति भिद्यते। इह त्वेका आनतिरित्युक्तम्। तस्माद्विषमो दृष्टान्त इति।

**द्वादशाहे वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां संख्याविकारः स्यात्॥ ६५॥ (२ आ० नि०)**

न चैतदस्ति, सकृद्दातव्यमिति। प्रत्यहमयं विशेषो भिद्यते। कुतः?। द्वादशाहे हि प्रत्यक्षं वचनम्, अन्वहं द्वादशशतं ददाति इति। पौण्डरीकश्च द्वादशाह-प्रकृतिः, तस्मात् पौण्डरीके प्रत्यहं चोदकप्राप्तानां प्रसक्तानां दक्षिणानामयं विशेष उच्यमानः तथैव कर्मावयवसम्बद्धानां विकार इति गम्यते, ततो भेदेन दक्षिणानां विशेष इति।

परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात्॥ ॥ ६६ ॥ (सि०)

न चैतदस्ति, दक्षिणाभेद इति, किन्तर्हि, सकृदेव दक्षिणा दीयेतेति। कुतः?। परिक्रयाविभागात्, समस्ता दक्षिणा विक्रियेरन्, कृत्स्नं हि क्रतुमङ्गीकृत्य दक्षिणा विधीयन्ते। कथम्?। तावतः पुरुषार्थत्वात्। यत् फल-वत्, तत् पुरुषस्य चिकीर्षितं, तच्च कुर्वाणस्य, सहायान् उपाददानस्य अयं विशेष उच्यते परिक्रयः। न चावयवः फलवान्, समुदायात् फलनिष्पत्तेः, समुदायं चाङ्गीकृत्य परिक्रयः क्रियमाणः, आ समुदायनिर्वृत्तेः, परिक्रयः कृत इति अन्तरा न भूयः क्रियते।

अपि च, पौण्डरीकशब्दसंयोगेन परिक्रयविशेष उच्य-मानः तच्छब्दवाच्यस्यैव भवतीति गम्यते, समुदायश्च पौण्ड-रीकशब्दवाच्यो न अवयवः, स हि समुदायशब्देन लक्ष्यते, तत्र लक्षणैव दोषः। असम्भवे हि लक्षणा आश्रीयते, न च, इहासम्भवः। अतः समुदायमङ्गीकृत्य सकृदेव ऋत्विजो त्रियेरन्निति। तस्मात्सकृत्परिक्रय इति, सकृद्दाने च

प्रयोगवचनानुग्रहः, प्रयोगप्राशुभावाच्च महाविषयता शास्त्रस्येति, तस्मादप्येतदेव न्याय्यमिति ।

## भेदस्तु गुणसंयोगात् ॥ ६७ ॥ (आ॰ नि॰)

यदुक्तं, द्वादशाहप्रकृतित्वात् पौण्डरीकस्य, तत्र च द्वादशाहे दक्षिणाभेदात् तथाभूताया एवेह विशेष उच्यते इति, तत् परिहर्त्तव्यम् । अत्रोच्यते, तत्राप्येकत्वात् क्रतोः, एक एव परिक्रयः । भेदस्तु वचनात् सुत्या सम्बन्धप्रयोजनो दक्षिणासंस्कारप्रयोजनस्य, न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यत इति ॥ (१० । ६ । १७ अ॰ ) ॥

---

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् ।

## प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ (१ म पू॰)

पौण्डरीक एवोदाहरणम् । तत्रैतत्समधिगतं, सकृदेव परिक्रय इति । अस्ति तु प्रकृतौ, माध्यन्दिने सवने दक्षिणा नीयन्ते इति । तत्र संशयः, किं सर्वासां कार्त्स्न्येन प्रत्यहं नयनम्, उत, सकृन्नयनम्, अथ वा प्रविभज्य नयनम् ? इति । किं प्राप्तम् ?, प्रत्यहं सर्वासां संस्कारः स्यात् । कुतः ? । प्रकृतिवत् प्रकृतौ हि सकला दक्षिणा तस्मिन् काले संस्कृताः, इहापि तद्वदेव सकलाः संस्कर्त्तव्या इति । कथम् ? । अङ्गां प्राधान्यात्, तद्गुणभावाच्च दक्षि-

णानां, सर्वा एताः सर्वेषाम् अङ्गां शेषभूताः, शेषभूतस्य चार्थस्य यः संस्कारः, स तेन तेन अङ्गा प्रयुज्यते इति, तस्मात् प्रत्यहं सर्वसंस्कारः।

एकार्थत्वान्नेति चेत् ॥ ६९ ॥ (२ य पू०)

न चैतदस्ति, प्रत्यहं सर्वसंस्कारः इति, किन्तर्हि सकृदेव संस्कारः स्यात्। कुतः ?। एकार्थत्वात् दक्षिणानाम्, एकं कार्य्यम् आनमनं, तासाञ्च नयनादिसंस्कारसंस्कृतानां प्रत्यर्पणं कार्य्यम्, एकस्मिन्नपि च अहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतः चोदनार्थ इति भूयः संस्कारेण प्रयोजनं नास्ति। तस्मात् सकृत् संस्क्रियेरन्निति।

स्यादुत्पत्तौ कालभेदात् ॥७०॥ (२ य पू० नि०)

नचैतदस्ति, सकृत्संस्कार इति, किन्तर्हि प्रत्यहम्। कुतः ?। उत्पत्तौ कालभेदात्, उत्पत्तौ दक्षिणानां विशिष्टकालसम्बन्धः श्रूयते, तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते इति, सर्वाश्चैता सर्वेषाम् अङ्गां शेषभूताः, तेषाञ्चाङ्गां माध्यन्दिनानि सवनानि भिद्यन्ते, तत्र च अगम्यमानविशेषत्वात् यस्य माध्यन्दिने सवने न संस्क्रियेरन्, तस्यैव संस्कारलोपः स्यात्, प्रयोगभेदात्। न च अन्यतरत्र संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति, तस्मात् भेदेन संस्क्रियेरन्निति।

विभज्य तु संस्कारवचनात् द्वादशाहवत् ॥७१॥ सि०)

न चैतदस्ति, समस्तानां प्रत्यहंसंस्कार इति, किन्तर्हि विभज्य संस्क्रियेरन्। कुतः?। वचनात्, द्वादशाहे प्रत्यहं नयनादिसंस्कारो वचनात् क्रियते, अन्वहं द्वादशशतं ददाति इति। पौण्डरीकस्य द्वादशाहप्रकृतिः, न ज्योतिष्टोमप्रकृतिः, तस्मात् परिक्रयैकत्वेऽपि सति वचनात् भेदेन संस्कार इति॥ (१०। ६। १८ अ०)॥

——

मनोः ऋचः इत्यनेन यावदर्थमृचामुपादानाधिकरणम्।

## लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्यात् लिङ्गस्य सर्वगामित्वादाग्नेयवत्॥ ७२॥ (पू०)

क्वचित् कर्मविशेषे श्रूयते, मनोः ऋचः सामिधेन्यो भवन्ति इति। तत्र संशयः, किं, यावत्यो मनुलिङ्गा ऋचः, ताः सर्वा दाशतयीभ्यः आनीय सामिधेनीषु विनियोक्तव्याः, उत काश्चिदेव, न सर्वाः? इति। किं प्राप्तम्?, सर्वा एवंलिङ्गा उपादेयाः। कुतः?। लिङ्गस्य सर्वगामित्वात्, इहैतावत् श्रूयते मनोः ऋचः सामिधेन्यो भवन्ति इति। मनुशब्दसंयोगो हि लक्षणम् ऋचामुपादीयमानानां, मनुसम्बन्धेन च शब्द उपलक्षयन् यावतीषु सम्भवेत्, तावतीः अविशेषात् शक्नोति उपलक्षयितुम्, एतच्च वचनं लिङ्गमात्रसम्बन्धेन विनियोजकं, न इयत्तापरिच्छिन्नानां विशेषकम्। तस्मात् अविशेषात् सर्वास्तल्लिङ्गवत्यः उपादेयाः, आग्नेयवत्, यथा, ऋजीषाणामाग्नेयेन संवत्सर-

मुपधाने, आसीत सूक्तेन सूक्तस्य अविच्छेदाय इति आग्नेयेन सूक्तेनेत्युक्तं, यावन्ति आग्नेयानि सूक्तानि दाशतयानि, सर्वैरिष्टका उपधीयन्ते, एवमिहापि मनुलिङ्गाभिः सामिधेनीकार्य्यं कर्त्तव्यमिति। यथा वा, अहर्गणे ऋजीषमप्सु प्रास्यति इति, सर्वेषामङ्गां यत् ऋजीषम्, अविशेषात् तत् सर्वं प्रास्यते, तद्वदिहापि अविशेषात् सर्वासामुपादानमिति।

## यावदर्थं वा अर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥ (सि०)

न चैतदस्ति, सर्वासां मनुलिङ्गानां दाशतयीनामागम इति, किन्तर्हि यावदर्थम् उपादेया इति। कुतः?। अर्थशेषत्वात्, कार्य्यशेषभावेन हि सामिधेनीनामुपादानं, तच्च कार्य्यम् अल्पाभिरपि सिध्यतीति, सिद्धत्वात्कार्य्यस्य, यद्यपि लक्षिताः सन्ति अपरा ऋचः, तथापि प्रयोजनाभावात् नैवोपादीयन्ते इति।

ननु कार्य्यशेषभावः सर्वत्र वाचनिकः, इहापि प्रत्यक्षवचनात् लिङ्गपरिच्छिन्नाः सामिधेन्यो विधीयन्ते इति सर्वासां विधानं भविष्यति इति। अत्राभिधीयते, सत्यं सर्वत्र वाचनिकः शेषभावः, न त्विह सामिधेन्यो विधीयन्ते, किन्तर्हि चोदकप्राप्तानाम् इयत्तापरिच्छिन्नानां केवलमनेन विशेष उच्यते, मनोः ऋचः इति। सोऽयं विशेष उच्यमानो यावत्य उपन्यस्ताः, ता एव विशिष्य कृतार्थत्वात् व्यावर्त्तन्ते, नापरा अपि तल्लिङ्गाः प्रसज्यन्ते।

तस्माल्लिङ्गवतीनां नियतानामुपादानं न सर्वासाम् इति। न च, लिङ्गवतीनां भावात् गुणानुरोधेन प्रधानावृत्तिर्न्याय्या। एवञ्च लाघवं प्रयोगप्राशुभावश्च भविष्यति इति। अपि च अस्मिन् पक्षे लिङ्गमपि समर्थमेव। कथम्?। लिङ्गं हि लक्षणत्वेन सामिधेनीनामुच्यते। तत्र यद्यपि न तल्लिङ्गाः सर्वा उपादीयन्ते, यास्त्विह प्रयुज्यन्ते ताः तल्लिङ्गा एव नान्यलिङ्गाः, तथापि लिङ्गमनुगृहीतमेव न बाधितमिति। तस्मात् यावदर्थमुपादानं न सर्वासामिति।

## आग्नेये कृत्स्नविधिः ॥७४॥ (१ म आ० नि०)

यदुक्तं, यथा आग्नेयैः सूक्तैरिष्टका उपदधाति इत्युक्ते सर्वाणि लिङ्गविशिष्टानि उपादीयन्ते, न कानिचित्, एवमत्रापि द्रष्टव्यम् इति, तत्परिहर्त्तव्यम्। अत्रोच्यते, युक्तम् आग्नेयेषु कृत्स्नविधानम्। कुतः?। इष्टकाबहुत्वात्, प्रतिसूक्तम् उपदधाति इति वचनात्, बह्वीनामुपधेयानां सूक्ताल्पत्वात् कार्त्स्न्येनोपादानमविरुद्धम्, इह तु इयत्तापरिमितानां विशेष उच्यते, इत्युपदिष्टो हेतुः। तस्मादयम् इह अदृष्टान्त इति।

## ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७५ ॥ (२ य आ० नि०)

यदप्युक्तम् अहर्गणे यथा ऋजीषस्य कृत्स्नस्य अप्सु प्राशनम्, एवमत्रापि अविशेषात् सर्वासामुपादानम् इति, तत् परिहर्त्तव्यम्। अत्रोच्यते, ऋजीषस्य प्रधानत्वात् युक्तम्, ऋजीषस्य अविशेषात् प्रतिपत्तिरियम् अभिधीयते,

सा सर्वस्य ऋजीषस्य स्यात्, यस्य न क्रियेत, तस्य संस्कार-परिलोपः स्यात्। तस्मात् सर्वेषामङ्गानां यत् ऋजीषं, तत् सर्वं प्रास्यति। इह तु अर्थशेषत्वादित्युपदिष्टो हेतुः। तस्मात् विषमम् एतत् ऋजीषेणेति ॥ (१०।६।१९ अ०)॥

---

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम्।

## वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥

ज्योतिष्टोमे मानोपावहरणे समाम्नाते। तत्र संशयः, किं यत्र क्वचित् मानं, येन केनचित् उपावहरणं कार्य्यम्, उत, वाससि मानं वाससा चोपावहरणम्? इति। किं प्राप्तम्?, अर्थात् यत्र क्वचिन्मानं, येन केनचिदुपावहरणम्। एवञ्च अनियमे लाघवं प्रयोगप्राशुभावश्च भविष्यति इति।

एवं प्राप्ते ब्रूमः, वाससि मानं वाससा च उपावहरणञ्च कार्य्यम्। कुतः?। वचनात् वचनमिदं भवति, वाससि मिनोति, वाससा च उपावहरति इतिवचनस्य सामर्थ्यात् नियम्येत ॥ (१०।६।२० अ०)॥

अथ वा, नैवात्र संशयः, वचनात् वाससि मानं वाससा चोपावहरणम्, एवं प्राप्तम् उत्तरविवक्षया कीर्त्यते, विशेषं चिन्तयितुम्। यच्च प्राप्तम् उत्तरविवक्षया कीर्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति।

---

अहर्गणेऽर्थात् वासोन्तरोत्पादनाधिकरणम्।

## तत्राहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥

अस्ति द्वादशाहः, तत्र चोदकप्राप्तम् उपावहरणं, वाससा उपावहरति इति। तत्र संशयः, किमुपावहरणार्थम् अन्यद्वास उत्पाद्यम्, उत, न? इति। किं प्राप्तम्?, नोत्पाद्यम्। कुतः?। न वचनमस्ति, अन्यत् भेदेनोत्पाद्यमिति, वचनादृते न प्रतीमो भेदेन उत्पत्तिं तस्मात् न उत्पाद्यमिति।

एवं प्राप्ते ब्रूमः, अहर्गणे अर्थाद्वासः उत्पाद्यम्। कथम्?। अहर्बहुत्वात्, बहूनि अहानि, तत्र चोदकेनैतत् प्राप्यते, वाससा उपावहरति इति। भेदेन च अनुत्पाद्यमाने उपावहरणार्थं एव न सिध्येत्। तस्मात् उत्पादयितव्यमिति ॥ (१०। ६ २१ अ०) ॥

---

उपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम्।

## मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ (पू०)

तत्रैवाहर्गणे चिन्त्यते, उक्तमेतत्, अर्थात् वास उत्पाद्यम् इति। तत्र संशयः, किं मानं प्रति उत्पाद्यम्, उत उपावहरणं प्रति उत्पाद्यम्? इति। किं प्राप्तम्?, मानं प्रति उत्पाद्येत। कुतः?। प्रकृतौ तेन दर्शनादुपावहरणस्य, ज्योतिष्टोमे यस्मिन् मीयते तेनैव उपावहरणं

क्रियते, प्रकृतिवच्च विकृतौ, चोदकानुग्रहाय तस्मिन्नेव काले उत्पाद्यमिति ।

## हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७६ ॥

(सि०)

न चैतदस्ति, मानं प्रति उत्पाद्यम् इति, किन्तर्हि, हरणं प्रति उत्पाद्यम् । कथम् ? । श्रुत्यसंयोगात्, न हि श्रूयते, मानं प्रति उत्पाद्यम् इति । श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते, अत्रैवेति । यस्य चार्थः प्रयोजकः, सप्रयोजनप्रयुक्तत्वात् तत्काल एव न्याय्यः, न अन्यकालः इति । हरणकाले चानेन प्रयोजनमिति हरणे एव न्याय्यम् उत्पादयितुमिति । यदुक्तं, प्रकृतौ मानि यत् वासस्तस्य हरणे दर्शनात्, इह चोदकानुग्रहाय तत्कालमेवोत्पाद्यम् इति, तत्परिहर्त्तव्यम्, अत्रोच्यते, न श्रूयते, तेनैव वाससा उपावहरणं कर्त्तव्यमिति, किन्तु अर्थात् तेन क्रियते, एकत्वात् अङ्गः, न हि तद्वासोऽन्यत्र व्यापृतमिति तेनैव क्रियते । यच्च अर्थात् कृतं, न तत् चोदकः प्रापयति, अवाचनिकत्वात् । न च, इह तदेव वास उभयार्थं सम्भवति, अहबेहुत्वात् । तस्मात् हरणकाले एव उत्पाद्यमिति ॥ ( १०।६।२२अ० ) ॥

इति भट्टश्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य षष्ठः पादः ॥

———

# मीमांसा-दर्शने

## १० अध्याये ७ पादः ।

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ।

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥१॥ (पू०)**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र संशयः, किं कृत्स्नः पशुरेकं हविः, उत प्रत्यङ्गं हविर्भेदः ? इति । किं प्राप्तम् ? । कृत्स्नः पशुरेकं हविः इति । कुतः ? । समस्तस्य चोदितत्वात्, समस्तो हि पशुरग्नीषोमौ प्रति चोद्यते, न पृथक् अङ्गानाम् अग्नीषोमीयता । तस्मात् पश्वाकृतित्वात् द्रव्यात् अवदाय अग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्टे पशुशब्दे लक्षणा स्यात् । तस्मात् कृत्स्नः पशुरेकं हविः । तच्च दर्शयति, अथो खल्वाहुः कापेया दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति इति । अथो खल्वाहुः गौपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति इति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि कृत्स्नः पशुरेकं हविरिति ।

**प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥ (सि० )**

वाशब्दः पक्षं व्यावर्त्तयति, नैतदस्ति, कृत्स्नः पशुरेकं

हविः इति । किन्तर्हि, प्रत्यङ्गं हविर्भेदः । कुतः ?। पृथक्-प्रकल्पनत्वात्, पृथगङ्गानि प्रकल्पन्ते, हृदयस्याग्रेऽवद्यति जिह्वाया अवद्यति वक्षसोऽवद्यति दोष्णोरवद्यति पार्श्वयोरवद्यति गुदस्यावद्यति । हृदयाकृतिकादिभ्योऽवदानं श्रूयते, नैतत् अविशसिते पशौ सम्भवति । तस्मात् हृदयाद्यर्थेन विशसितव्यः पशुः, तस्मिंश्च विशस्यमाने पश्वाकृतिर्न भवति । तदेवम् आपतति, पश्वाकृत्या यागस्य क्रियमाणस्योपकुर्य्यात्, तां पश्वाकृतिम् अन्तर्धाय च न शक्यते साक्षात् यागद्रव्यं परिच्छेत्तुम् । तस्मात् प्रणाड्या सा आकृतिः उपकर्त्तुम् अर्हतीति पश्वाकृतिकस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि, तेभ्योऽवदाय प्रदातव्यमिति, ग्रहवत्, यथा, सोमे ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति । आश्विनं गृह्णाति इति पृथक्-कल्पनत्वात् सोमरसो हविः न सोमलता, एवम् अत्रापि द्रष्टव्यम् । समस्तचोदना तु अङ्गहविष्टेऽपि प्रणाड्या अवकल्पत एव । अथ यद्दर्शनमुक्तं, तत् सुतरामनेकहविष्टे उपपद्यते । कथम् ?। कृत्स्नं पशोरवदानम् अन्येन अनुजिघृक्षन् न कृत्स्नस्य पशोरवदीयते इति दर्शयति ॥ (१०।७।१अ०) ॥

---

पशोर्हृदयादिभिरेवाङ्गविशेषैः यागानुष्ठानाधिकरणम् ।

**हविर्भेदात् कर्मणोऽभ्यासः तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ ( पू० )**

प्रत्यङ्गं हविर्भेद इत्येतत् समधिगतम् । इदमिदानीं

सन्दिह्यते, किं, येन केनचिदङ्गेन हविषा यागो निर्वर्त्तयितव्यः, उत, सर्वेभ्योऽवदातव्यम्, अथ वा परिसङ्ख्या, केनचित्? इति। किं प्राप्तम्?। सर्वेभ्योऽवदातव्यम्, कृत्स्नावदानकर्म्म अभ्यसितव्यम् इति। कुतः?। हविर्भेदात्, भिन्नानि हवींषि हृदयादीनि यानि अवदाने सङ्कीर्त्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि, तेभ्यः सर्वेभ्योऽवदातव्यं, पश्वाकृत्या हि केचिद्विशेषाः परिच्छिद्यन्ते, तत् यदि एकस्मात् अङ्गात् अवदीयेत, न पश्वाकृतिपरिच्छिन्नाः सर्वे विशेषा उपसंगृह्येरन्, तत्र पश्वाकृत्या अङ्गभावो न कृतः स्यात्, अनेकविशेषणविशिष्टं हि मांसराशिं परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा। एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशिः सर्वावदानानभ्यासेनैव यथाश्रुतादेव अवत्तं भवति। पृथक्प्रकल्पितेषु अङ्गेषु एकस्मादङ्गात् अवद्यन् कांश्चित् विशेषान् जह्यात्, अभ्यस्यंस्तु अवदानानि सर्वान् विशेषान् परिगृह्णाति। तस्मात् सर्वेभ्योऽवदातव्यमिति।

आह, ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वात् अन्यतमेन यागः सिध्येत। उच्यते, सिध्येदेव, यदि विशेषाणां यागसम्बन्धः श्रूयेत। पश्वाकृतिस्तु श्रूयते। तस्माद्विशेषेषु गृह्यमाणेषु अङ्गभावः कृतो भवतीति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेषः, को वा विशेषो गृहीतः को वा नेति, अतः सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय, यश्च विशेषो न गृहीतः तेन विनापि यथाश्रुतमेव

भवतीति कल्प्यमाने तस्य पश्चाज्ज्ञात्या परिच्छेदे न कश्चिदप्यधिकोऽर्थोऽङ्गीकृतो भवतीति अनादरस्तं प्रत्याश्रितः स्यात्। तस्मात् सर्वेभ्योऽवदेयं हृदयादिभ्योऽवशिष्टाच्चेति।

## आज्यभागवद्वा निर्देशात् परिसङ्ख्या स्यात्॥ ४॥ (उ०)

हृदयादिभ्योऽवदातव्यं नावशिष्टात्। कुतः?। तेषां निर्देशात् निर्दिश्यन्ते हृदयादीनि, इकादश वैतानि पशोरवदानानि इति। तत्र प्राप्तत्वादेवैषामेष विधिर्न सम्भवति इति। आनर्थक्यात् नानुवादः। निर्गुणञ्च पुनःश्रवणमिति इतरेषामश्रुतानां परिसङ्ख्यायकं भवति। यथा, न गन्तव्यं न भोक्तव्यमिति च विस्पष्टं प्रतिषेधः, एवमेव परिसङ्ख्यायां प्रतिषेधः क्रियते। आज्यभागवत्, यथा गृहमेधीये, पञ्चमे पक्षे आज्यभागग्रहणं परिसङ्ख्यार्थमित्युक्तम्, एवमिहापि प्राप्नोति। तस्मात् परिसङ्ख्येति।

## तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात्॥ ५॥ (पुनः पू०)

वाशब्दः पक्षं व्यावर्त्तयति, न चैतदस्ति, परिसङ्ख्येति, तत्र हि त्रयो दोषाः, स्वार्थप्रहाणं, परार्थकल्पना प्राप्तबाधश्च। यदुक्तं निर्देशादिति, नैतदेवं, तेषां हृदयादीनां द्व्यवदानत्वं विवक्षन् अभिनिर्दिशेत्, नैवं वचनव्यक्तिर्भवति, एकादशैव पशोरवदानानि, नाभ्यधिकानि, यानि अवदानानि तानि द्विर्द्विरवद्यति

इति, कथन्तर्हि, एकादश द्विर्द्विरवद्यति इति । कुतः ? । नात्र अवदानम् अनूद्यते, अप्राप्तत्वात् । कथम् अप्राप्तिः ? । पशोः पञ्चावदानत्वात् पञ्चावदानत्वं हि पशोः श्रूयते । तस्मात् नानुवादः, एतानि द्विर्द्विरवद्यतीति । एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति, अवशिष्टानां त्यागं न वारयति । तस्मात् सर्वेभ्योऽवदेयमिति ।

## अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥ (यु०)

इतश्च न परिसङ्ख्या । कुतः ? । अंसशिरोनूकसक्थिप्रतिषेधात्, एवमेतेषां प्रतिषेध उपपद्यते, यदि न परिसङ्ख्यानं भवति, भवति च सः । नांसयोरवद्यति न शिरसो नानूकस्य नापरसक्थ्योः इति । परिसङ्ख्याने अंसशिरोनूकसक्थ्नां प्रतिषेधोऽनर्थकः स्यात् । अथ तु न परिसङ्ख्या, ततः प्रदानत्वात् यानि अंसादीनि, तेषां निरवदानं प्रतिषिध्यते । किमिदं निरवदानम् ? इति । निष्कृष्य तस्मात् अङ्गात् अवदानं निरवदानं, द्विरवद्यति इति तत् प्रतिषिध्यते इति, अतः अवैरेवाङ्गैः इज्या क्रियते इति ।

## अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥ ॥ ७ ॥ (सि०)

अपि वेति पक्षव्यावृत्तिः, परिसङ्ख्या एव स्यात्, नैव सर्वेभ्योऽवदातव्यम् । कुतः ? पुनःश्रवणस्यार्थवत्त्वात् । ननु

त्रिदोषा परिसङ्ख्येत्युक्तम्। उच्यते, नात्रायं दोषो भवति। कथम्?। अवदानं हि चोदकेन होमार्थं प्राप्नोति, इह तस्य हृदयादिभिः सम्बन्धः क्रियते। तेन हृदयादीनि वाक्येन होमसम्बद्धानि भवन्ति, नान्यानि अङ्गानि पश्वाकृतेर्देवतासम्बन्धीनि। न च, एतस्मिन् प्रत्यक्षे हृदयादिवाक्ये सति पश्वाकृतेर्देवतासम्बन्धोऽन्येषाम् अङ्गानां होमसाधनत्वे नोपपद्यते, हृदयादिष्वपि एवमाकृतिकात् गृह्यमाणेषु आकृतेर्देवतासम्बन्ध उपपद्यत एव। तस्मादन्यानि अङ्गानि परिसङ्ख्यायन्ते।

अपि च अनवदानीयशब्दो भवति, मारुत्यान् अनवदानीयान् सुराग्रहांश्च आजिसृत्भ्यो हरति इति। यदि परिसङ्ख्या, ततः किञ्चिदङ्गमनवदानीयं भवति, इतरथा सर्वम् अवदानीयं स्यात्, अनवदानीयशब्दो नोपपद्यते। तस्मात् परिसङ्ख्येति। ननु शृङ्गखुराभिप्रायमनवदानीयं भविष्यति। नेत्युच्यते, अनवदानीयं हि तत्, अनवदानीयहरणे आजिसृत्भ्यः इति चतुर्थी नोपपद्यते। न हि, शृङ्गखुरेण आजिसृतोऽभिप्रेयन्ते। स्यादेतत्, परिक्रयार्थं तत् भविष्यतीति। उक्तमेतत्, न देवताद्रव्येण स्वकार्य्याणि कर्त्तव्यानि इति। तस्मान्न शृङ्गखुराभिप्रायम्।

### अब्राह्मणे च दर्शनात् ॥ ८ ॥ (यु० १)

इतश्च परिसङ्ख्येति। कुतः?। अब्राह्मणे हि भक्षं दर्शयति। कथम्? ककुभो राजपुत्रः प्राश्नाति ध्रुवगोप इति ककुभो भक्षं दर्शयति। इतरथा यागे प्रवृत्तस्यादर्शनं

स्यात्, सर्वप्रदानं भवेत्, निरवदानप्रतिषेधात्। तस्मादपि परिसङ्ख्येति।

## श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ॥ ६ ॥ (यु० २)

इतश्च परिसङ्ख्येति। कुतः?। श्रुताश्रुतोपदेशात्, श्रुताश्रुतोपदेशो हि भवति, इयानि अङ्गानि अभिमृशति श्रुतानि अश्रुतानि च इति। यदि न परिसङ्ख्या, सर्वेषां श्रपणं स्यात्, अश्रुतदर्शनं नोपपद्येत। परिसङ्ख्याने तु सति हृदयादिभ्योऽन्येषाम् अयज्ञशेषत्वं, यथा पर्य्यग्निकृतं पात्नीवतमुत्सृजन्ति इति। तेषां तत्र श्रपणं न स्यात्, अश्रुतदर्शनं चोपपद्यते। तस्मादपि परिसङ्ख्येति ॥ (१०। ७। २ अ०) ॥

---

ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम्।

## इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ (पू०)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयं, यो दीक्षितो यदग्नीषोमीयं पशुमालभेत इति। अस्ति तत्र चोदकप्राप्तः स्विष्टकृत्। इहैवं श्रूयते, त्र्यङ्गैः स्विष्टकृतं यजति इति। तत्र संशयः, किम्, इज्याशेषेभ्यः त्रिभ्यः अङ्गेभ्यः स्विष्टकृता यष्टव्यं, उत, अनिज्याशेषेभ्यः?। किं प्राप्तम्?। इज्या-

शेषेभ्यः इति। कुतः?। एवं प्रकृतिवत् शब्दानुग्रहो भविष्यति, त्रीणि अङ्गानि यानि इज्याशेषभूतानि, तैश्च इज्यायां क्रियमाणायां त्रिशब्दोऽप्यनुगृहीतो भवति।

## त्र्यङ्गैर्वा शरवत् विकारः स्यात् ॥ ११ ॥ सि०)

अनिज्याशेषैस्त्र्यङ्गैरिज्येत, एष विकारः स्यात्, न त्रीणि यानि कानिचिदङ्गानि। यदि यैः कैश्चित्त्रिभिरङ्गैरिज्या कर्त्तव्येत्यभ्युपगम्येत, तत्राङ्गैरिति न विधीयेत, प्राप्तत्वादेव, त्रित्वार्थं विधानं स्यात्, त्रिभिरिज्येत इति, तत्र त्रिशब्दोऽङ्गशब्देनासमर्थ एव स्यात्, असामर्थ्ये समासो नोपपद्येत।

अपि च असत्यां त्रयाणाम् अङ्गानामेकस्यां साधारण्यां क्रियायाम् एकस्मिन् वा साधारणे गुणे त्रिशब्दस्याङ्गशब्देन विशेषणविशेष्यसम्बन्धाभावात् सामर्थ्यं न विद्यते, यानि त्रीणि अङ्गानि त्रित्वसम्बद्धानि तानि त्र्यङ्गानीति। असति विशेषे व्यवहाराभावात् साकाङ्क्षं भवति, कतमानि त्र्यङ्गानीति। त्वत्पक्षेऽपि कथम्?। तदुच्यते, समाहार एष समासः, येषां समाहार उक्त एकक्रियागुणसम्बन्धो वा, तानि त्र्यङ्गानि, एषाञ्च समाहार उच्यते, यत् दोष्णः पूर्वार्द्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः इति। समवदानं समाहारः, एकेन अग्निना गुणेन सम्बन्धः, एकया च समवद्यतिक्रियया। तस्मात् एतानि त्र्यङ्गानि, एतानि चानिज्याशेषाणि। अतो वचनप्रामाण्यात् अनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृदिज्येतेति। शरवत्,

यथा, शरमयं बर्हिः इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते, एवमिहापि इज्याशेषता बाधिष्यते इति ।

आह, इज्याशेषाणां प्रतिपत्तिरेषा, न च, अन्येन इज्यायां क्रियमाणायामेतत् प्रतिपादितं भवति, तस्मात् इज्याशेषाणां कार्य्यं अवर्त्तमानानि न इज्याशेषविकारभूतानि भवितुमर्हन्ति इति । अत्रोच्यते, यद्यपि प्रतिपाद्यन्ते तथापि नान्यथा, तस्यां निर्वृत्तौ इज्याशेषैः कर्त्तव्यायामनिज्याशेषाणि विधीयन्ते, एतानि तत्र प्रतिपादयितव्यानि, एतान्यपि हि कृतकार्य्याणि प्रतिपादयितव्यान्येव । यानि तु शेषभूतानि तानीह प्रतिषिद्धानि यथाकाममन्यत्र प्रतिपादयिष्यन्ते इति ॥ (१० । ७ । ३ अ०) ॥

---

अध्यूध्न्या इडाभक्षविकारताधिकरणम् ।

## अध्यूध्नी तु होतुः चाङ्गवत् इडाभक्षविकारः स्यात् ॥ १२ ॥ (पूर्वपक्षे पू०)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदमाम्नयते, अध्यूध्नीं होत्रे हरन्ति इति । तत्रायमर्थः सांशयिकः, किम्, अध्यूध्नी होतृभक्षस्य विकारः, उत अविकारो होतुर्नियम्यते ? इति । कथं विकारः स्यात्, कथं नियम्यते ? इति । यदि अध्यूध्नी विधीयते, होत्रे हरन्ति इत्येतदनूद्यते, ततो विकारः । अथ अध्यूध्नीमुद्दिश्य होत्रे हरन्ति इति विधी-

यते, ततो नियमः। किं प्राप्तम्?। होतुः भक्षस्य विकारः स्यात्। कुतः?। अपूर्वा अध्यूध्नी अदैवतशेषत्वात्, इड़ाभक्षे न प्राप्ता, सा न शक्या अनुवदितुम्, अतो विधीयते, होतृभागहरणेऽध्यूध्नी भवन्ती होतृहरणे प्रत्यक्षा, आनुमानिकम् इड़ाभक्षं निवर्त्तयति इति। ग्राङ्गवत्, यथा अनिज्याशेषैस्त्वग्ङ्गैः इज्याशेषाणि निवर्त्तन्ते, तद्वत्।

## शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥ (पूर्वपक्षे उ०)

वाशब्दः पक्षं व्यावर्त्तयति, इड़ाभक्षविकारः इति। कथं स्यादिड़ाभक्षविकारः, यद्यपूर्वा अध्यूध्नी स्यात्?। सा हि इड़ायां समवैति। कथम्?। अनस्थिभिरिड़ां बर्द्धयन्ति इति तस्याः हरणं प्राप्तं, होतृसम्बन्धो न प्राप्तः, स विधीयते, याम् इमाम् अध्यूध्नीं हरन्ति, तां होत्रे नान्यस्मै इति, होत्रे त्वस्य भक्षं कुर्वन्तीति। अपि च होत्रे हरन्ति इत्यानन्तर्य्यात् एकवाक्यता प्रत्यक्षा, इतरस्मिन् पक्षे, अध्यूध्नीं हरन्ति इति च होतृशब्दव्यवधानात् कल्पयितव्या भवेत्। तस्मात् भागी नियमः, रथवत्, यथा, यजुर्युक्तं रथमध्वर्य्यवे ददाति इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अव्यवधानाच्च अध्वर्य्युभागी नियमः, एवमिहापि होतृभागी नियमः इति।

## अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति, न भागी नियमः, इड़ाभक्ष-

विकारः इति । कुतः ? । नास्ति शास्त्रं, येन इड़ाभचे अध्यूध्नी स्यात्, नन्विदम् उक्तम्, अनस्थिभिरिड़ां वर्द्धयन्ति इति । उच्यते, अनुवादस्वरूपत्वादस्य, प्राप्तत्वाच्च अनस्थिकानां वचनान्तरेण, अथ यद्यूष्परिशिष्यते तत्समवत्त धान्याम् आनयति तत् हृदयं प्रास्यति जिह्वां वक्षस्तनिममतस्तेस्तेस्या ? वनिष्टुम् इति, अनुवाद इति गम्यते, न चात्र अध्यूध्नी कीर्त्त्यते । तस्मादप्राप्ता । अप्राप्ता चेत् होतृहरणमुद्दिश्य विधीयते । यत्तु, व्यवधानात् अप्राप्तैव एकवाक्यता कल्पयितव्या इति । अपूर्वत्वात् अध्यूध्न्या अनुवादाभावेऽनर्थकत्वपरिहाराय कल्पयिष्यामः । एवञ्च स्वपदगतं हरणं विहितं भविष्यति इति । इतरथा तु होत्रेऽध्यूध्नीसम्बन्धो विधीयते, न स्वपदगतहरणम् । तस्मादपि भचविकारः ।

## अपि वा दानमात्रं स्यात् भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ ( द्वि० पू० )

अपि वा इति पक्षव्यावृत्तिः । यदा एवं, न वचनान्तरेण इड़ाभक्षेऽध्यूध्नी प्राप्ता, साऽपूर्वा हर्त्तव्या विधीयते, न तर्हि भक्षविकारः । दानमात्रमेतत् होत्रे अध्यूध्नीं हरन्ति इति । नात्र भक्षशब्देन अभिसंयोगो विधीयते । तस्मान्न भक्षविकार इति ।

## दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्यात् शेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥ ( उ० )

तुशब्दः पक्षं व्यावर्त्तयति, दानमात्रमेतत् न भक्षविकारः इति। नैतद्दानं, दातुः अभावात्, पशुर्हि एवं संकल्पितः, यागं वर्जयित्वा नान्यत् स्वकार्य्यम् अनेन कार्य्यमिति। तेन स्वाम्यभावात् दानं नास्ति। कथं स्वाम्यभावः?। शेषं प्रत्यविशिष्टत्वात्, शेषं प्रति यथा यजमानस्तथा होता, उभावपि न प्रभवतो द्रव्यस्येति नास्ति दानम्। अथ कथं भक्षशब्दानभिसंयोगे भक्षः?। चतुर्थी तादर्थ्ये भवति, होत्रर्थां अध्यूध्नी, तया होता अभिप्रेयते, होत्रे सा होतुरुपकरोति, सा भक्षमाणा सामर्थ्यजननस्य दृष्टस्य लाभाय यया च यावत्या च मात्रया उपकारिणी भवति, तत्र चतुर्थीश्रुतिरनुगृह्यते, इतरथा हि अदृश्यमाने उपकारे चतुर्थीश्रुतिर्बाध्येत। तस्मादिड़ाभक्षविकारः इति॥ (१०।७।४ अ०)॥

---

वनिष्ठुभक्षविकारताधिकरणम्।

## अग्नीधस्य वनिष्ठुरध्यूध्नीवत्॥ १७॥

तत्रैवाग्नीषोमीये पशौ श्रूयते, वनिष्ठुरग्नीधे इति। किं तत्र अधिकरणप्रदेशः, तत्र यः संशयः, स इहापि। किं वनिष्ठुरग्नीधे, विकारो भक्षस्य, उत तस्य भागनियमः? इति। ततः स एव पूर्वपक्षः, अपूर्वत्वात् विधीयते, तस्माद्विकारः इति। तस्य तदेव उत्तरं, वचनान्तरेण अनस्थिभिप्राप्तत्वात् भागनियमः इति। ततस्तदेवोच्यते, अनस्थिभि-

रिड़ां बर्द्धयन्ति इति अनुपात्तत्वात् अप्राप्तो वनिष्ठुर्विधीयते, इति।

अत्राह, ननु वनिष्ठुरपि तत्र सङ्कीर्त्तनात् प्राप्त एव इति। अत्रोच्यते, वनिष्ठुं प्रास्यति इत्येतावत्तत्र, तेन इड़ायां प्रासनमात्रं तस्य विधीयते इड़ासंस्कारार्थेन। नासौ इड़ा न तस्य भक्षशब्दसंयोगः। तस्मात् प्रासनकात्रं, न तस्य भक्षे प्राप्तिः। पूर्वस्मिन् वचने न चतुर्थीसम्बन्धः, तस्यैतदग्नीधे इति। चतुर्थीसम्बन्धेन भक्षणं विधीयते। तस्मात् पूर्वेण अधिकरणेन अतुल्याशङ्कायां तुल्यता सूत्रेणातिदिश्यते, सर्वेष्वेव अधिकरणप्रदेशेषु अतुल्याशङ्का निवर्त्त्यते॥ (१०।७।५ अ०)॥

---

मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम्।

## अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्॥ १८॥

(पू०)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति। अस्ति तत्र मैत्रावरुण ऋत्विक्, तं प्रति सन्देहः, किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति, न? इति। किं प्राप्तम्?। अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत् कृतं भवति। तस्मात् अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्।

## स्याद्वा होत्रध्वर्य्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥ ( सि० )

स्याद्वा मैत्रावरुणभक्षः, प्रैषेषु असौ अध्वर्य्युविकारः, अनुवचनेषु होतुः, तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह इति, अतस्तस्य तयोः कर्माभिसम्बन्धात् अर्थापत्त्या भक्षं लभते। तस्मात् सभक्षः स्यादिति ॥ (१०।७।६ अ०)॥

——

मैत्रावरुणस्यैकभागताधिकरणम् ।

## द्विभागः स्यात् द्विकर्मत्वात् ॥ २० ॥ ( पू० )

अथेदानीं मैत्रावरुणमेव प्रति भवति सन्देहः, किं द्विभागो मैत्रावरुणः, उत एकभागः ? इति। किं प्राप्तम् ?। द्विभागः स्यात्, अध्वर्य्युविकारत्वादध्वर्य्युभागं प्राप्नोति, होतृविकारत्वात् होतृभागं प्राप्नोति। तस्माद् द्विभागः स्यात् इति।

## एकत्वाद्वैकभागः स्यात् भागस्याश्रुतिभूतत्वात् ॥ २१ ॥ ( सि० )

वाशब्दः पक्षं व्यावर्त्तयति, न द्विभागः स्यात्, एकभागो भवेदिति। कुतः ?। भागस्याश्रुतिभूतत्वात् इति, न इह अध्वर्य्युभागो मैत्रावरुणस्य श्रूयते, नापि होतृभागः। यदि हि उभौ श्रूयेयातां, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात्, यादृशेन

तयोः प्राप्तिर्गंस्यति, तत्रैकत्वान्मैत्रावरुणस्य, एकेनैव भागेन यावती प्राकृती शक्तिः, सा कृतेति द्वितीयभागं चोदको न प्रापयति। तस्मात् एकभागः स्यात् इति ॥ (१०।७।७ अ०) ॥

---

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम्।

## प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ (पू०)

अग्नीषोमीये एव पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते। तं प्रति सन्देहः, किं तस्य शेषभक्षो भवेत्, न? इति। किं प्राप्तम्?। भवेदिति। कुतः?। वपां हि श्रपयन्नध्वर्य्युकर्म्म करोति, प्रतिप्रस्थाता वपां श्रपयति इति। तस्मात् स्यादस्य भक्षः इति।

## अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥ (सि०)

अभक्षः स्यात् प्रतिप्रस्थाता। कुतः?। यस्मिन् यागे स अध्वर्य्योर्विकारः, तस्य द्रव्यशेषो नास्ति, वपामसौ श्रपयति, तस्याः सर्वप्रदानत्वं, तत्र शेषाभावात् किं भक्षयेत्? यत्र शेषोऽस्ति हृदयादिषु अंशेषु, न तत्र असौ अध्वर्य्योर्विकारः। अन्यद्धि वपापूर्वम् अङ्गापूर्वात्, चोदकेन च यस्य अपूर्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्म्मकरे भक्षः, एवं हि तस्योपकारको भवति इति। अन्यकर्म्मकरे भक्ष-

यति तदुपकाराभावादनङ्गं स्यात् । तस्मात् न अन्य-कर्मणि भक्षणं चोदकः प्रापयति इति ।

ननु अङ्गेष्वपि प्रतिप्रस्थाता अध्वर्य्युविकारः, स हि अवदानं करोति, दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति इति । यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा । अथ वा अन्यकार्य्यम् एतत् अवदानम्, अन्यकार्य्यकं प्राक्तम् । तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भेऽवदाने गृहीते द्विसङ्ख्या केवला श्रूयते, नावद्यत्यर्थः । इह पुनः प्रतिप्रस्थातुरवदानं चोद्यते, नारम्भः, यदत्रावदानं भविष्यति, स प्रदानारम्भः । तत्र प्रकृतौ प्रदाने चिकीर्षिते अर्थादध्वर्य्युरचोदितोऽवदानं निर्वर्त्तयति, तेन वा अन्येन वा तत् कर्त्तव्यं, सन्निधानात् अध्वर्य्युरेव करोति, न नियोगतस्तत् तत्राध्वर्य्युकर्म । यच्चार्थात् कृतं, न तत् चोदकः प्रापयति । अर्थादेव तत् इहाध्वर्य्युणा अन्येन वा कर्त्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थम् । तस्मात् न अवद्यन्नपि प्रतिप्रस्थाता अध्वर्य्युकर्मणि वर्त्तते इति न अस्याङ्गेषु भक्षः स्यात् । ( १० । ७ । ८ अ० ) ॥

——

आज्यभागौ यजति इत्यनेन अपूर्वगृहमेधीयविधानाधिकरणम् ।

विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥ (१म पू०)

चातुर्मास्येषु श्रूयते, मरुद्भ्यो गृहमेधिभ्यः सर्वासां

दुग्धे सायमोदने इति। तत्रेदं समामनन्ति, आज्यभागौ यजति इति। तत्र संशयः, किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा, चोदकेन अनेन च द्वाभ्यामेकं कर्म चोद्यते, किं वा, अर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्मान्तरयोरुत्पत्तिः, अथ परिसङ्ख्यार्थं, अथ वा आज्यभागौ वर्जयित्वा अन्यच्चोदकः प्रापयति, अथ वा चोदकेन आज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्वो गृहमेधीयः ? इति। किं प्राप्तम् ? विकृतौ एतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणम् अनर्थान्तरं स्यात्, अनुवादमात्रमेव सुहृद्भूत्वा आचार्य्य उपदिशति स्म, न अर्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतत् अनुवादमात्रमेतदित्यन्यच्चिन्त्यतामिति। कथम् ?। तद्धि गम्यते, अन्यच्च नावगम्यते इति। यथा अस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां, देवदत्तो यज्ञदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य वक्तारः, एवमेतदपीति।

## अपिवाग्नेयवत् द्विशब्दत्वं स्यात् ॥२५॥ (२य पू०)

यदि हि एतावदेवास्य सामर्थ्यं गम्येत उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात्, अथ तु अन्यदपि कर्त्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशङ्का न भवति इति। अस्ति च सामर्थ्यं, चोदकेन अनेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते, गृहमेधीयो हि भवति प्रकृतिवत्। किं तत् सादृश्यम् ?। आज्यभागौ यजति इति, प्रकृता-

विदं श्रूयते, आज्यभागौ यजति, एवं प्राकृतेन यागेन स्वकार्य्यं करोति इति, इह पुनः आज्यभागौ यजति इति स प्रकारोऽतिदिश्यते, एवमनेन प्रकारेण यागः स्वकार्य्यं करोति, यथा द्वाभ्यां शब्दाभ्याम् एकोऽर्थ उच्यते। आग्नेयवत्, आवाहने अग्निमग्न आवह इति य एवं सम्बोध्यते, स एवोच्यते, आत्मानमावह इति। यथा वा, एष दण्डः, दण्डेन प्रहर इति द्वाभ्यामेक एव दण्ड उच्यते। एवमिहापि प्राकृतौ, आज्यभागौ यजति इति विकृतावपरेण आज्यभागवचनेन तद्वन्तं गृहमेधीयं करोति इति वाक्यं पूर्य्यते, न यागान्तरं चोद्यते, नापि चोदकप्राप्तस्य अनुवादमात्रमिति।

## न वा शब्दपृथक्त्वात् ॥२६॥ (३य पू०)

वाशब्दः पक्षं व्यावर्त्तयति। नैतत् आग्नेयावाहनेन तुल्यं, तत्र हि अग्ने आवह इत्येतावता आवोढा अग्निरुक्तः, अग्निमावह इत्येतावता वोढव्योऽग्निरुच्यते, न ताभ्यामेकोऽर्थः क्रियते। इह तु प्रकृतिवत् इत्येकेनैव वचनेन आज्यभागवत्ता अवगम्यते। पुनः आज्यभागौ यजति इति कृतकरं शास्त्रमनर्थकं स्यात्। तस्मादनुवादमात्रमित्यध्यवसातव्यम्। ननु अनुवादोऽनर्थकः। नेत्युच्यते, अर्थवादार्थेन भविष्यति, आज्यभागौ यजति यज्ञतायाः इति, यदेतत् प्रकृतिवत् करोति, तथा कुर्वन् आज्यभागौ प्रक्ष्यति, तत्र यज्ञता सम्पत्स्यते इति।

अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ (४र्थ पू०)

अथवा अधिकयोः कर्मान्तरयोरुत्पत्तिः, न, अनुवाद इति, आज्यभागावत्र क्रियेते एवेति, किन्तर्हि उपदिश्येते यागावत्र कर्त्तव्याविति। कुतः ?। अनुवादमात्रं हि अनर्थकं, शब्दपृथक्त्वान्न द्वाभ्यामेकं कर्मोच्यते। अथ कस्मात् न, अर्थवादार्थता गुणार्थता विकारार्थता वा भवति ? इति। उच्यते, अर्थवादासङ्कीर्त्तनात् नात्रार्थवादार्थता। नन्वत्र यज्ञतायाः इत्यर्थवादः सङ्कीर्त्यते। उच्यते, न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेण अर्थवादेन किञ्चित् प्रयोजनमस्ति। तस्माद्यागान्तरविधानार्थ एवायं नार्थवादः। ननु यागान्तरं नास्ति आज्यभागसंज्ञकम्। उच्यते, आज्यभागधर्मकं भविष्यति। न च, गुणसङ्कीर्त्तनमस्ति, यथा अप्सुमन्तौ आज्यभागौ यजति इति। नचान्यो वचनप्रकारोऽस्ति, यथा नान्यामाहुतिं पुरस्तात् जुहुयात् इति प्रतिषिद्धप्रसवार्थं यदन्यामाहुतिं पुरस्तात् जुहुयात् इति निन्दित्वा स्रुवेणाधारयति इति वचनम्। तेषु हि सत्सु एवमर्थवत्ता स्यात्। तस्मात् कर्मान्तरवचनम्, अपूर्वत्वात्, एवमपूर्वमर्थं करिष्यति, इतरथा न विशिष्टोत्पत्तिः स्यात्, किं पुनरत्र कर्मान्तरे लक्षणमिति ?। एकस्यैव पुनःश्रुतिरविशेषादनर्थकं हि स्यात् इति। अतः क्रमेण प्रधान-

यागादुपरिष्टादपरौ यागौ आज्यभागधर्मकौ विधीयेते, अज्ञातौ ज्ञाप्येते इत्यर्थः ।

**प्रतिषेधः स्यादिति चेत् ॥ २८ ॥ (५म प०)**

इति चेत् पश्यसि, कर्मान्तरचोदनेति । तन्न, तस्य आज्यभागौ इति नामसङ्कीर्त्तने सति अनाज्यभागौ न शक्यौ प्रतिपत्तुम् । तद्धर्मकत्वे सति लक्षणशब्दः, आज्यभागौ इति विशेषस्य षविवचा स्यात्, तस्मात् न कर्मान्तरवचनं, किन्तु परिसङ्ख्यया प्रतिषेधः स्यात्, यथा पञ्च पञ्चनखा भक्षाः इति शशादीनां पञ्चानां कीर्त्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यत इति, एवमिहापि अन्येषामङ्गानां प्रतिषेधो भविष्यति इति ।

**नाश्रुतत्वात् ॥ २९ ॥ (५म प० नि०)**

न हि अत्र प्रतिषेधवाचि किञ्चित्पदं श्रूयते, नापि इतराङ्गवचनं, न च असम्प्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति, पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति । तदुक्तं, तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् (१ । १ । २५ । सू०) इति । तस्मान्न प्रतिषेधः, तत्र हि त्रयो दोषाः, अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च । तस्मात् कर्मान्तरवचनमेतदिति ।

**अग्रहणादिति चेत् ॥ ३० ॥ (६ष्ठ प०)**

इति चेत् पश्यसि, कर्मान्तरचोदनेति उक्तस्तत्र ।

दोषः, स एव महान्। तस्मात् किं भवतु ? आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषां अङ्गानां चोदकेन। स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति, अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यति इति। किमेवं भविष्यति ? इति। संहत्यकारिता न कल्पयिष्यते, चोदकप्राप्तयोर्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति। विस्पष्टं सञ्ज्ञाग्रहणेन पुनः श्रुतिरित्येतन्न कर्मान्तरं कल्पयिष्यते। यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते न तिष्ठन्नेव तिष्ठतीत्युक्तः, एतावता देवदत्ताख्योऽयमभिधीयत इति गम्यते। न च परिसङ्ख्या त्रिदोषा सती कल्पिता भविष्यति। तस्मात् चोदकेन अगृहीतावाज्यभागौ गृहीताविति।

आह, कस्मादिदं गौरवमाश्रितम्। यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां, चोदक एव तौ शक्नुयात् ग्रहीतुं, प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनम् ? इति। उच्यते, न गौरवस्य किञ्चित् साधु प्रयोजनं, न तु गौरवेण यत् कृतं तन्न कृतं भवति। गौरवस्य तु दोषोऽस्ति, न तु दोषोऽपि सति चोदक आज्यभागौ गृह्णाति, यः परिहारेण यथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। तस्मात् अग्रहणात् आज्यभागयोर्ग्रहणमिति।

## न तुल्यत्वात् ॥ ३१ ॥ (६४ पू० नि०)

नैतदेवम्। यदि हि चोदकः पृथक् पृथक् प्राकृतान्

दार्थान् अपेक्षेत, तत्र आज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत, अन्यांश्च गृह्णीयात्, न त्वसौ पृथक् पृथक् पादार्थानपेक्षते किन्तु प्राकृतमपूर्वम् अपेक्षते यद्वत् तेन, तद्वदनेनेति, तस्मिन्नपेक्ष्यमाणे आज्यभागवत्तापि अपेक्षिता भवति। तत्रैतदेवमागच्छति, कृतकरं शास्त्रमनर्थकं भवतीति। तस्मादन्यैरङ्गैः तुल्यत्वात् न चोदकेनागृहीतयोराज्यभागयोर्ग्रहणमिति।

## तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ ( ७म पू० एवं तस्य नि० )

अथ यद्युच्येत, आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवत् गृहमेधीयो भवति। कथमाज्यभागौ यजति? एवमिति। यथा सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिषु इतिवाक्यशेषात् न अन्यासु इष्टिषु साप्तदश्यम्। यथा शिंशपामानय वृक्षम् इति नान्योऽपि वृक्ष आनीयेत, शिंशपैव वृक्षशब्देन गृहीता भवति। एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम्। एवं प्राप्ते ब्रूमः, तथा तद्ग्रहणे स्यात्, तुल्यमग्रहणेन तत् ग्रहणं, पृथक् पदार्थापेक्षिणि चोदके स्यात् अग्रहणमन्येषामङ्गानां, प्राकृता पूर्वापेक्षिणि तु नैतदुपपद्यत इति।

## अपूर्वतान्तु दर्शयेत् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥ ( सि० )

एवं तर्ह्यपूर्वो गृहमेधीयः। कुतः?। ग्रहणस्य

अर्थवत्त्वात्, एवं ग्रहणम् आज्यभागौ यजति इति अर्थवद्भविष्यति, पूर्ववत्त्वे तत् अनर्थकं स्यात्, आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकाङ्क्षो न चोदकेन अन्यानि अङ्गानि गृह्णातीति, यस्यान्तु विकृतावपूर्वं किञ्चिदङ्गमुक्तं, न तेन सह एकवाक्यतामगत्वा प्राकृतानि अङ्गानि गृह्णातीति। कुतः?। केन प्रकारेण कुर्यादिति तस्याकाङ्क्षा न किं कुर्यादिति, प्रकृतौ चाङ्गवत्ता नाम प्रकारो विहितः प्रयोगवचनेन च आकाङ्क्षते, न तु विकृतावङ्गवत्ता क्लृप्ता, सा कल्पयित्वा आकाङ्क्षिता भवति, न च क्लृप्तामुज्झित्वा कल्पनीयसम्बन्धो न्याय्यः, तस्मात् तत्रापि चोदकेन अङ्गानि गृह्यन्त इति। गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूदिति तेषामङ्गानां कल्पयित्वा सर्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियत एवेति॥ (१०।७८अ०)॥

---

गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम्।

## ततोऽपि यावदुक्तं स्यात्॥ ३४॥

गृहमेधीय एवोदाहरणम्। तत्रैषोऽर्थः समधिगतः, आज्यभागाभ्यामेतत् निराकाङ्क्षम् अन्याङ्गानि न गृह्णाति इति। तदुच्यते, किमेष एवोत्सर्गः, सर्वाण्येवान्यानि अङ्गानि न गृह्णाति इति?। एवं खलु प्राप्ते, उच्यते, ततोऽपि यावदुक्तं स्यात्, ततः एवमुक्तं, अङ्गानि

नान्यानि गृह्णाति इति अगम्यमाने विशेषे न गृह्णीयात्। गम्यते चात्र विशेषः प्रत्यविहितत्वादाज्यभागयोरिति। अतो यस्य यस्य प्रत्यक्षवचनः सर्वेषु तेषु पुनर्गम्यते विशेषस्तस्मात् यावदुक्तं स्यात्, यथा अग्नये समवद्यति इति, इडामुपह्वयति इति॥ (१०।७।१७अ०)॥

——

[गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम्।

## स्विष्टकृद्भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात्॥ ३५॥ (सि०)

अस्ति गृहमेधीयः, तत्रैषोऽर्थः समधिगतः, अपूर्वो गृहमेधीय इति। तत्रेदमामनन्ति, अग्निं स्विष्टकृतं यजति इति। तत्रेदं सन्दिह्यते, किमन्येषां शेषकार्य्याणां भक्षणस्य च परिसङ्ख्यायकः स्विष्टकृच्छब्दः, उत न? इति।

आह, ननु अपूर्वत्वाद्गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते। अत्रोच्यते, पूर्ववान् गृहमेधीय इति कृत्वा चिन्तेयम्। पूर्वस्य अधिकरणस्य प्रयोजनं चिन्त्यते, यदि परिसङ्ख्या भवेत्, आज्यभागाभ्यां यागाः परिसङ्ख्यायेरन् नान्ये इति। इदमपि प्रयोजनं भवति, स्विष्टकृच्छ्रवणेन शेषभक्षाः परिसङ्ख्यायन्ते, न? इति। किं प्राप्तम्? । स्विष्टकृति श्रूयमाणे परिसङ्ख्या स्याद्भक्षाणाम्। कुतः?। तुल्यकारणत्वात्, तुल्यं हि कारणं स्विष्टकृतो भक्षाणाञ्च। उभयमपि शेषसंस्कारार्थं तत्र वचनादयं शेषसंस्कारो भवति, नान्य इति प्रतिषिध्येरन् भक्षाः।

अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥३६॥
( पू० )

यथैव स्विष्टकृत्श्रवणेऽन्येषां शेषकार्य्याणामदर्शनमिति शेषभक्षा न सन्तीति उच्यते, एवं भक्षणदर्शनात् भक्षाः सन्तीति गम्यते। दर्शनादर्शनयोश्च दर्शनं प्रमाणम्। किं तद्दर्शनम्?। इडामुपपह्वयति इति उपह्वानं ह्यनुज्ञापनं, तत् सति भक्षणे भवति, नासति। तस्मात् न प्रतिषेधः।

प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥
( उ० )

प्रतिषेधो वा, तुल्यकारणेन हि प्रत्यक्षश्रुतेन आनुमानिकं बाध्यते। अथ यद्दर्शनमुक्तं, तद्विधिपूर्वस्य भक्षस्य भविष्यति, एवं ह्याम्नायते, अथ इडामेवावद्यति न प्राशित्रमुपह्वय प्राश्नति इति तस्य दर्शनम्। क्त्वा चिन्तायाः प्रयोजनं न वक्तव्यं, पूर्वाधिकरणस्य हि तत् प्रयोजनं, न च प्रयोजनस्य प्रयोजनमुच्यते यत् प्रयोक्तव्यं तच्च पूर्वाधिकरणम् ॥ (१०।७।११ अ०)॥

---

प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम्।

शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ ॥ (पू०)

ज्योतिष्टोमे श्रूयते, शंय्वन्ता प्रायणीया सन्तिष्ठते न

पत्नीः संयाजयन्ति इति। इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजति इति। तत्र संशयः, प्रायणीया किं शंय्वन्ता कृत्स्नसंस्था वा, उत शंय्वन्तैव? तथा आतिथ्या किम् इडान्ता कृत्स्नसंस्था वा, उत इडान्तैव। किं प्राप्तम्?, शंय्विडान्तत्वे विकल्पः स्यात् इति। कुतः?। पत्न्यनुयाजस्य प्रतिषेधात्। शंय्वन्ता सन्तिष्ठते इति तावत् व्यक्तमेव वचनम्, अपरमपि वचनं न पत्नीः संयाजयन्ति इति। यदि शंय्वन्तैव नित्यं, पत्न्यनुयाजप्रतिषेधो-ऽनर्थकः स्यात् तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थान-मुच्यते। कथम?। प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोति इति। तथा आतिथ्याया-मनुयाजान् केवलान् न करोति, नान्यं न करोति इति, अकर्त्तव्यपरिसङ्ख्यानार्थमेवेदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति।

## नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥३९॥ (सि०)

न त्वेतदस्ति, विकल्प इति, एक एव कल्पः शंय्वि-डान्तत्वम्। तत्र हि विशिष्टं वचनं, द्वितीयः कल्पो नास्त्येव। न हि तस्य वचनम् अस्ति। न च पत्न्यनुयाज-प्रतिषेधकं कृत्स्नसंस्थानवाचकं, किन्तर्हि तन्नित्यानुवादः, नित्यप्राप्तं अनुवदति, यथा, नान्तरिक्षे न दिवि अग्निः चेतव्यः इति पूर्वाभ्यां सहैकवाक्यतैव अनयोः शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति इति तथा

इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजन्ति इति। अत्र यत्नलाघवेन स्तुतिः। ननु प्रतिषेधवचनः कृत्स्न-संस्थानं वदेत्। य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः स एवाश्रुतकल्पनायाम्। तस्मात् शंय्विडान्ततैव स्यादिति॥ (१०।७।१२ अ०)॥

---

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव संय्विडाभ्यां संस्थाधिकरणम्।

## प्रतिषेधार्थवत्त्वात् चोत्तरस्य परस्तात् प्रतिषेधः स्यात्॥ ४०॥ (पू०)

इदमेवोदाहरणं, शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति इति, इडान्ता आतिथ्या सन्तिष्ठते नानुजान् यजति इति। तत्र द्वौ शंयू द्वे इडे इति। तत्रायमर्थः सांशयिकः, किं परेण शंयुना शंय्वन्ता सन्तिष्ठते, उत पूर्वेण?। एवं, किं परया इडया इडान्ता सन्तिष्ठते, उत पूर्वया? इति। किं प्राप्तम्?। पूर्वाभ्यां शंय्विडाभ्याम् इति। कुतः?। पूर्वाभ्यामपि संस्थापयता स्तुत्यर्थः कृतो भवति इति। कृते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्य्यात्? इति। उच्यते, उत्तराभ्यामपि संस्थापयन् शब्दार्थमेव करोति, तत्र नियमात् पूर्वाभ्यां संस्थापयन्न शब्दार्थं परिच्छिन्द्यात्, शब्दार्थं परिच्छेत्स्यामः, यदि उत्तराभ्यामपि संस्थापनं शब्दो वक्ष्यति, ततस्ताभ्यां

संस्थापयन् भूयांसमुपकारं लप्स्यते तस्मादनियमः, पूर्वाभ्यामुत्तराभ्यां वेति।

एवं प्राप्ते ब्रूमः, उत्तराभ्यामिति। कुतः?। निषेधार्थवत्त्वात्, तदैव पत्नीसंयाजस्यानुयाजस्य च प्रतिषेधोऽर्थवान् भवति, यदि उत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः, तस्मादुत्तराभ्याम् इति। ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तम्। उच्यते, न सत्यां गतौ न्याय्यं, तस्मान्न पूर्वाभ्यामिति। उच्यते, लिङ्गमेतदुपदिष्टं, न च लिङ्गं साधकं भवति, प्राप्तिरुच्यताम्? इति, पक्षेऽपि हि लिङ्गस्य अर्थवत्ता स्यात्, अत्रोच्यते, इयं प्राप्तिः, यदा विशेषो नावगम्यते, शंयुरन्ते यस्या अङ्गरीतेः, सा शंय्वन्ता, एवम् इडान्ता। सैषा अङ्गरीतिर्विधीयते शंय्वन्ता इडान्ता च। सा च विधीयमाना अन्यानि अङ्गानि परिसञ्चष्टे। कथम्?। शंय्वन्तया अङ्गरीत्या इडान्तया च सङ्कीर्त्यमानया शंयिवडान्ततायां सत्याम् अन्यानि अङ्गानि न आकाङ्क्षन्ते अनाकाङ्क्षमाणानि च नैकवाक्यतां यान्ति, अतोऽप्राप्तानीति गम्यते। नन्वेवं सति पूर्वाभ्यां शंयिवडान्तता न कञ्चिदर्थमधिकं साधयति इति। उच्यते, नैष दोषः, न हि तस्यार्थे पृथग्वाक्यं यस्य आनर्थक्यं परिजिहीर्ष्यते, अस्य वाक्यस्योत्तरान्तता प्रयोजनं, तस्मात् उत्तराभ्यां संस्था स्यादिति।

**प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात्॥ ४१॥**

(सि०)

नैतदस्ति, उत्तराभ्यां शंयुिडाभ्यां सन्तिष्ठते इति। पूर्वाभ्यामेव। कुतः?। नेह शंय्वन्ताया अङ्गरीतिर्भावो विधीयते, इडान्तायाश्च। किन्तर्हि संस्था विधीयते, शंयिवडान्ता सन्तिष्ठते, प्रवर्त्तमाना शंयिवडान्ता च जाता सन्तिष्ठते, न प्रवर्त्तते। तिष्ठत्स्वेव कर्मसु सन्तिष्ठतीत्युच्यते। तत्र पूर्वाभ्यामुत्तराभ्यामिति विशेषे अनवगम्यमाने पूर्वाभ्याञ्च न प्रवर्त्तेत उत्तराभ्याञ्च। तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति। प्रतिषेधश्च नित्यानुवाद इत्युक्तम्।

## प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥ ४२ ॥ (यु०)

इतश्च पूर्वाभ्यां परं न कर्त्तव्यमिति। कुतः?। त्वरायुक्तो हि प्रतिषेधोऽयं कृतः। कथम्?। देवासुराः सत्यमभजन्त, अर्द्धं देवाः सत्यस्याभजन्त अर्द्धमसुराः, तदसुरैः सत्यमनूच्यमानं देवान् अपाक्रामत् ते प्रायणीयं निरवपन् तच्छंय्वन्तमासीत्। अथ असुरा यज्ञमायंस्ततो यज्ञः तत्वर इति तमेवं कृत्वा त्वरितमाद्रियन्ते इति। तथा आतिथ्यं निरवदंस्तदिडान्तमासीदथा सुरा यज्ञमायंस्ततो यज्ञः तत्वरः इति तदिडान्तमेव कृत्वा त्वरितमाद्रियन्ते इति। त्वराकृतश्च पूर्वमपेचन्ते, नोत्तरम्। तस्मात् नान्यो देशः प्रतिषेधस्य। तस्माच्च पूर्वाभ्यामेव शंयिवडाभ्यां परं न कर्त्तव्यमिति॥ (१०।७।१३ अ०)॥

———

षडुपसद उपसाद्यन्ते इत्यादिना अपूर्वोपसत्कर्मविधानाधिकरणम् ।

## उपसत्सु यावदुक्तमकर्म स्यात् ॥४३॥

( १म पू० )

अस्ति ज्योतिष्टोमः, तत्रेदमाम्नायते, षडुपसद उपसाद्यन्ते इति, ताः प्रकृत्य आमनन्ति, अप्रयाजास्ता अननुयाजाः इति । तत्र संशयः, किं यावत् प्रतिषिद्धं तावन्न कर्त्तव्यम्, अन्यत्सर्वं कर्त्तव्यम् । अथ यावत् उपदिष्टं तावत् कर्त्तव्यम्, अन्यत् सर्वं न कर्त्तव्यम् । अथ अपूर्वा उपसदः ? इति । किं प्राप्तम् ?, उपसत्सु यावदुक्तं न कर्त्तव्यं, अप्रयाजास्ताः अननुयाजाः इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दोऽवशिष्टांश्चोदकप्राप्तान् न वारयति । तस्मादविशिष्टं सर्वं कर्त्तव्यम् इति ।

## स्रौवेण वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥४४॥

( २य पू० )

न चैतदस्ति, प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यमिति, यावदुपदिष्टं कर्त्तव्यम् । स्रौवेण आधारेण सर्वमन्यत् परिसङ्ख्यायते, अविशिष्टो ह्यसौ स्रौव आघारः पुनराम्नायते, न तत्र कश्चित् गुणो विशिष्टः श्रूयते, तस्मात्तेन तत् परिसङ्ख्यायते ।

## अप्रतिषिद्धं वा प्रतिषिध्यप्रतिसवात् ॥ ४५ ॥

(२य पू० नि०)

न चैतदस्ति, यावदुक्तं कर्त्तव्यम्, अवशिष्टं नेति, किन्तर्हि सर्वं कर्त्तव्यं प्रतिषिद्धं वर्जयित्वा इति। एवं हि श्रूयते, अप्रयाजास्ता अननुयाजास्ताः इति, एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य बाधको भवितुमर्हति। यदुक्तं, निर्गुणं स्रौवाघारश्रवणमिति, प्रतिप्रसवोऽयं न परिसङ्ख्या। एवं श्रूयते, नान्यामाहुतिं पुरस्तात् जुहुयात् यदन्यामाहुतिं पुरस्तात् जुहुयादन्यन्मुखं कुर्य्यात् स्रुवेणाघारमाघारयतीति, नान्यामाहुतिं पुरस्तात् जुहुयात् प्राकृतिकीभ्यः। एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखं, यदन्यामाहुतिम् औपसदीम् अग्न्यादिकां जुहुयादन्यन्मुखं कुर्य्यात् तस्मात् स्रुवेणाघारयति इति। आघारादिकान्याहुतीर्जुहोति इत्याघारादीनाम् अभावमाशङ्क्य पुनः प्रतिप्रसवोऽयम् आघारमाघारयति इति, नान्यत् करोति, किन्तर्हि आघारयति, न नाघारयतीति। तस्मान्न परिसङ्ख्या, प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यम् इति।

अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥
॥ ४६ ॥ (सि०)

अथ वा अपूर्वा उपसदः, अनिज्या प्राकृतस्य शेषस्य, नित्यानुवादोऽयम्, अप्रयाजास्ता अननुयाजाः इति। मुख्यदेवतामनभीज्याम् उपदिश्य प्रधानदेवता विधीयन्ते, नान्यामाहुतिं पुरस्तात् जुहुयात् आग्नेय्या अग्निर्हि मुखम् इत्यभिप्राय, यदन्यामाहुतिं पुरस्तात् जुहुयात् वैकृतीमन्यत् मुखं कुर्य्यादाग्नेय्या अग्निर्हि मुखं स्रुवेण आघारमाघा-

रयति नान्यं यजति अग्निमनीकं सोमं शल्यं विष्णुर्जनम् इति। तदेतदाघारेण निराकाङ्क्षीकृतं नान्येन प्रकृताङ्गेन सह एकवाक्यतामेति। अतः प्राप्ता मुख्यदेवता अनभीज्या अतोपदिश्यन्ते नान्यं यजति, तस्मादग्निः प्रथम इज्यते इति। (१०। ७। १४ अ०)।

---

वारुणेनैककपालेन इत्यादिना अपूर्वस्य अवभृथस्य विधानाधिकरणम्।

## अवभृथे वर्हिषः प्रतिषेधात् शेषकर्म स्यात्॥ ॥ ४७॥ (१म पू०)

अस्ति ज्योतिष्टोमेऽवभृथः, वारुणेनैककपालेनाभृथमभ्यवयन्ति इति। तत्रैतदाम्नायते, अपवर्हिषः प्रयाजान् यजति॥ अपवर्हिषौ अनुयाजौ यजति इति। तत्रैषोऽर्थः सांशयिकः, किं, वर्हिर्मात्रं वर्जयित्वा अन्यत्सर्वं कर्त्तव्यम्, उत, आज्यभागाभ्यामन्यत् परिसङ्ख्यायते। अथ वा अपूर्वोऽवभृथः? इति। किं प्राप्तम्?। वर्हिर्मात्रं वर्जयित्वा शेषकर्म स्यात्। कुतः?। वर्हिःप्रतिषेधात्, अपवर्हिषौ अनुयाजौ यजति इति वर्हिर्मात्रं प्रतिषिध्य कृतार्थः शब्दोऽन्यत् चोदकप्राप्तं न शक्नोति वारयितुं, तस्मादन्यत् स्यादिति। ननु आज्यभागौ यजति इति परिसङ्ख्यार्थं ग्रहणम्, अप्सुमन्तावाज्यभागौ यजति इति। गुणार्थं तन्मन्यते स्म।

## आज्यभागयोर्वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ॥ ४८ ॥ (२य पू०)

न चैतदस्ति, शेषकर्म कर्त्तव्यमिति, किन्तर्हि शेषप्रतिषेधः स्यात् । कुतः ? । आज्यभागयोः श्रवणात्, अप्सुमन्तावाज्यभागौ यजति इति । ननु अप्सुमत्तागुणकविधानार्थं तत् इत्युक्तम् । नेत्याह, लिङ्गक्रमाभ्यां प्राप्तावेव अप्सुमन्तौ, अप्स्वग्ने सधिष्टव अप्सु मे सोमो अब्रवीत् इति, ताभ्यामेतौ आज्यभागौ अप्सुमन्तावेव, निर्गुणमेवेदं वचनम् इतरेषामङ्गानां परिसङ्ख्यायकं भवितुमर्हति । यत्तु, अपबर्हिषः प्रयाजान् अपबर्हिषौ अनुयाजौ यजति इति, परिसङ्ख्यातानां प्रयाजानाम् अनुयाजयोश्च विधानार्थं भवतीति । तस्मात् शेषाणामेवाङ्गानां परिसङ्ख्येति ।

## प्रयाजानां त्वेकदेशप्रतिषेधात् वाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥४९॥ (२य पू० नि०)

तुशब्दः पक्षं व्यावर्त्तयति, न चैतदस्ति, परिसङ्ख्येति । त्रिदोषा परिसङ्ख्या इत्युक्तम् । किञ्च अपबर्हिषः प्रयाजान् यजति इति वाक्यशेषो नावकल्पते, यदि प्रयाजान् यजति इत्येष विधिस्तदा बर्हिःप्रयाजोऽपि प्राप्नोति, तत्र अपबर्हिषः इत्येतत् नोपपद्यते । अथ बर्हिषः प्रतिषेधः, प्रयाजानां विधिर्नावकल्पते, तत्राप्राप्तस्य बर्हिषः प्रतिषेधोऽनुपपन्नः । उभयविधाने वाक्यं भिद्येत, वाक्यशेषो नोपपद्यते, एकञ्चेदं वाक्यम् । तस्मान्न शेषपरिसङ्ख्या ।

## आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत् स्यात् ॥ ५० ॥ (सि०)

अथ वा अपूर्वोऽवभृथः, यद्वत् गृहमेधीयः, तद्वत् स्यात्। आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यामेकवाक्यतामित्वा निराकाङ्क्षो नान्यैः प्राकृतैरेकवाक्यतामेति। तस्मादपूर्वोऽवभृथः इति ॥ ( १० । ७ । १५ अ० ) ॥

---

वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम्।

## विरोधिनामेकश्रुतौ नियमः स्यात् ग्रहणस्यार्थवत्त्वात् शरवच्च श्रुतितो विशिष्टत्वात् ॥५१॥ (सि०)

अस्ति वाजपेयः, शरदि वाजपेयेन स्वाराज्यकामो यजेत इति। अत्र श्रूयते, खादिरो यूपो भवति इति। तत्र संशयः, किं, खादिरो वा पालाशो वा रौहितको वा, उत, खादिर एव ? इति। तथा अन्यत्र श्रूयते, बृहत् पृष्ठं भवति इति। तत्र संशयः, किं बृहद्वा पृष्ठं, रथन्तरं वा, उत, बृहदेव ? इति। त्रैयातव्यायां श्रूयते, यवमयो मध्यमः इति। तत्र संशयः, किं यवमयो वा व्रीहिमयो वा, उत, यवमय एव ? इति। सर्वेष्वेषु किं प्राप्तं, विरोधिनाम् अन्यतमस्मिन् श्रूयमाणे नियमः स्यात्, खादिर एव यूपः, बृहदेव पृष्ठं, यवमय एव मध्यम इति। कुतः ?।

